[51] किणं तत्रैव मध्यस्थं अधोभागे च [52] कुष्ठितम् ।
[53] खुरसन्धि ततो विद्यादधोभागे ततः [54] खुरम् ॥ २२

खुरस्य पार्श्वे [55] पार्ष्णिः स्यादग्रभागे [56] नखो भवेत् ।
खुरस्याधस्तले चैव [57] मण्डूकी तलमध्यगा ॥ २३

[58] खुरमांसं विजानीयात् [59] क्षीरिकाख्यं विचक्षणः ।
हृदयाभ्यन्तरे [60] कक्षः पार्श्वस्तस्यैव पार्श्वतः ॥ २४

[61] जठरं पार्श्वमध्यस्थं तस्य [62] नाभिश्च मध्यतः ।
रोमराजिं ततो विद्यान्[63]मूत्रकोशमतः परम् ॥ २५

आकट्याः पश्चिमे भागे [64] पुढौ [65] स्फीजौ च कीर्तितौ ।
[66] रन्ध्रः कुक्षेरधोभागे [67] उपरन्ध्रस्ततोऽन्तरे ॥ २६

---

51. *Kiṇa*—The centre of the ankle—கணுக்கால் சந்தியின் மத்தி.
52. *Kuṣṭhita*—Just below the ankle—குளம்புத்தண்டு.
53. Hoof joint—குளம்புகளின் சந்தி.
54. Hoof—குளம்பு.
55. *Parṣṇi*—The sides of the hoof—குளம்பின் பின்புறம்.
56. Nail; Front of the hoof—நகம்—குளம்பின் முன்புறம்.
57. *Mandūkī*—Bottom of the hoof—குளம்பின் அடிச்சுவடு.
58, 59. *Ksīrīka*—The flesh of the hoof—குளம்பின் மாம்ஸம்.
60. Armpits—அக்குள்.
61. Belly—வயிறு.
62. Navel—தொப்புள்.
63. Kidneys—மூத்திராசயம்.
64. Hips—இடுப்பு.
65. Buttocks—பிருஷ்டபாகம்
66, 67. Urinal and seminal holes—மூத்திர துவாரம்.

[68] पुच्छमूलं च वाहानां भासंल पुच्छमूलतः ।
अधः प्रकीर्तितः [69] पायुः [70] सीवनी च ततः परम् ॥ २७

[71] मुष्कौ च [72] कटिसन्धिं च ततो विन्द्यात्परं बुधः ।
अधस्तात्कटिसन्धेस्तु [73] ऊरुसन्धिरुदाहृतः ॥ २८

सीवनीतलसन्धिस्तु ऊरुपादाभिधायका ।
ततः स्थूरं [74] विजानीयात्तस्याधो मन्दिरं भवेत् ॥ २९

किणं चैव ततो विन्द्यात् मन्दिराभ्याशसंस्थितम् ।
ततः परं विजानीयात्कलां वैकुष्टिकां तथा ॥ ३०

खुरान्तमांसमण्डूकीः ततो विन्द्याद्विचक्षणः ।
अग्रजङ्घाद्वयं चैव वक्षो ग्रीवा शिरोमुखम् ॥ ३१

पूर्वकायः समुद्दिष्टः पृष्ठदेशस्तु मध्यगः ।
आकटेः पश्चिमो भागः खुरान्तश्चापरः स्मृतः ॥ ३२

॥ इति प्रदेशाध्यायः ॥

---

68. The root of the Tail—அடிவால்.
69. Anus—மலதுவாரம்.
70. *Sīvani*—The portion between anus and scrotum—மூத்திரதுவாரம் மலதுவாரம் இவைகளின் மத்தியிலுள்ள கோடு.
71. Scrotum—அண்டகோசங்கள்.
72. Hip joint—இடுப்புசந்தி.
73. Thigh joint—சப்பை.
74. *Sthūra*—Just below the Thigh Joint and above the knee—சப்பையின் கீழ்புரம்.

॥ * शालिहोत्रोन्नयाभिधाद्ग्रन्थादुद्धृतोऽयं भागः ॥

---

पार्श्वयोः कर्णनाड्योस्तु [1] मन्ये अश्वस्य निर्दिशेत् ।
हृद्वक्षोऽन्तरमश्वस्य [2] क्रोडं विन्द्याद्विचक्षणः ॥

......

बाह्वोरुपरिरश्वस्य [3] जांगले परिकीर्तिते ।

........

पश्चाद्भागं तुरंगस्य सन्धिश्चापरगात्रयोः ।
त्रयाणां सन्निपातेन [4] त्रिकमित्यभिधीयते ।

......

पुच्छस्य च तथा दण्डो [5] वर्तिकेत्यभिधीयते ॥

---

* Some of the technical expressions used in this text but not defined here are found defined in *Śālihōtrōnnaya* and extracts from that source are appended above.

1. *Manyā*—The sides of the ear nerves—காது நரம்புகளின் பக்கம்.
2. *Kroḍa*—In between the forelegs—முன் கால்கள் கூடும் சந்தி.
3. *Jāngala*—The top of the forearm—முன்னங்கால்களின் மேல்புறம்.
4. *Trika*—The back, the joints of the front portion and the back portions are collectively so called—முதுகு முன்சந்தி பின்சந்தி—இவைகளைச் சேர்த்து சொல்வது
5. *Vartikā*—The tail stick—வால்.

## ॥ अङ्गलक्षणप्रकरणाध्यायः ॥

---

लक्षणं शृणु वाहानां मुनिना यत्तु भाषितम् ।
सर्वदोषहरं नित्यं नृपाणां जयवर्धनम् ॥ १

अशुभैर्लक्षणैर्युक्ता हया न वहनोचिताः ।
अतो लक्षणमेवादौ तेषां व्याख्यामि देहजम् ॥ २

ओष्ठयोः सृक्विणोश्चैव जिह्वायां दशनेषु च ।
वक्त्रे तालुनि नासायां गण्डयोर्नेत्रयोस्तथा ॥ ३

ललाटे मस्तके चैव केशकर्णपुटे तथा ।
ग्रीवायां केसरे चापि स्कन्धे वक्षसि बाहुके ॥ ४

जङ्घायां जानुनोश्चाधः कूर्चे पादे तथैव च ।
पार्श्वयोः पृष्ठभागे च कुक्षौ कट्यां च वालधौ ॥ ५

मेहने मुष्कयोश्चापि तथैवोरुद्वयेऽपि च ।
आवर्ते च खुरे पुच्छे गतौ वर्णे स्वरे तथा ॥ ६

महादोषं त्यजेत्प्राज्ञश्छायायां गतिसत्त्वयोः ।
प्रधानस्यैव वाहानां लक्षणं यत्प्रतिष्ठितम् ॥ ७

शुभाशुभविवेकाय तद्विद्याद्बुद्धिमान् भिषक् ।
शालिहोत्रादिभिः सम्यक् त्रिकालज्ञानकोविदैः ॥ ८

आताम्रौ पूजितौ चोष्ठौ वालहीनौ मृदुत्वचौ ।
सुप्रोथस्तु नतः शस्तो विपरीतं विवर्जयेत् ॥ ९

सृक्विण्योर्मृदुता शस्ता जिह्वायां रक्तता तथा ।
अतश्चान्यद्धि दोषाय तन्वी दीर्घा च सा शुभा ॥ १०

घनाः स्निग्धाः सुबद्धाश्च समा दन्ताः सुशोभनाः ।
षट्संख्येष्वघनं (?) वृत्तैः तेषु व्यञ्जनिबिन्दवः ॥ ११

आयतं तुरगाणां च निर्मांसं प्रियदर्शनम् ।
सुगन्धं पूजितं वक्त्रं विपरीतं सुगार्हितम् ॥ १२

तालु रक्तं प्रशस्तं च संपुटे चैव नासिके ।
नातितूणसमौ गण्डौ वाहानां कीर्तितौ शुभौ ॥ १३

अक्षते निर्गदे चैव मेघाभे कलतारके ।
स्निग्धायते विशाले च श्रेष्ठे मधुनिभेक्षणे ॥ १४

कनकप्रातिसंकाशे शस्ते वाहस्य लोचने ।
सावर्तं च विशालं च अनिम्नं चैव वाजिनः ॥ १५

ललाटं पूजितं प्राहुर्मुनयः शास्त्रकोविदाः ।
शिरः समं तथा वृत्तं आवर्तद्वयभूषितम् ॥ १६

केशाश्च मृदवश्चैव वाहानां चैव पूजिताः ।
ऋजुता कर्णयोश्चैव तीक्ष्णता तनुता तथा ॥ १७

अदीर्घरोमता चैव प्रशस्ता च प्रकीर्तिता ।
सुवृत्तां कुञ्चितां चैव भिन्नां ग्रीवां विदुर्बुधाः ॥ १८

केसरं च जटाहीनं मृदुलं च प्रशस्यते ।
सुबद्धौ च दृढौ चैव स्कन्धौ वाहस्य पूजितौ ॥ १९

वक्षः प्रशस्तं विपुलं निर्घातविशिरं च तत् ।
ऋजू वक्षःसमौ बाहू गूढजानू प्रशस्यते ॥ २०

अवक्रा मांसहीना च वाजिजङ्घा प्रशस्यते ।
शुभं स्मृतं सुवृत्तं च समं चैव नतोन्नतम् ॥ २१

कूर्चमेवंविधं विन्द्यात्कंपव्रणविवर्जितम् ।
दृढमण्डूकिकायुक्तो वर्तुलः श्लिष्टसन्धिकः ॥ २२

खुरः खुरखुराकारः प्रशस्तः समुदाहृतः ।
पार्श्वे चैव समे वृत्ते ऊर्ध्वमांसोपशोभिते ॥ २३

अविलम्बि सुवृत्तं च उदरं चातिपूजितम् ।
नातिदीर्घसमं पृष्ठं किञ्चिच्च विनतं शुभम् ॥ २४

सुवृत्ता चैव पीना च कटिर्धन्या प्रकीर्तिता ।
मृदुस्निग्धायतैर्युक्तं वालैः पुच्छं प्रशस्यते ॥ २५

वृषणौ च समौ वृत्तौ अखर्वौ चाप्यरोमशौ ।
कृष्णवर्णविहीनं तु ह्रस्वं मेढ्रमिहेष्यते ॥ २६

अनुपूर्वं परं चैव शोभनोरुद्वयं मतम् ।
पूर्वजङ्घे च जङ्घे च खुरान्तं चापि पश्चिमम् ॥ २७
शालिहोत्रादिभिः प्रोक्तं मुनिभिः पूर्ववेदिभिः ।

॥ इत्यङ्गलक्षणाध्यायः ॥

---

## ॥ अश्वलक्षणोपोद्घाताध्यायः ॥

इदानीं लक्षणं कृत्स्नं तुरङ्गाणां प्रवक्ष्यते ।
आवर्तवर्णसत्त्वानि छायागन्धगतिस्वराः ॥ १

शरीरं चैव वाहानां प्रोक्तं लक्षणमष्टधा ।
शरीरगामि तत्सर्वं लक्षणं शुभनिन्दितम् ॥ २

श्रेष्ठं तस्मात्तुरङ्गाणां शरीरं त्वाद्यलक्षणम् ।
सत्त्वं ततो द्वितीयं च तृतीयो वर्ण उच्यते ॥ ३

चतुर्थी तु गतिर्ज्ञेया पञ्चमस्तु स्वरस्तथा ।
गन्धः षष्ठस्तु विज्ञेयश्छाया चैव तु सप्तमी ।
आवर्तमष्टमं ज्ञेयमेतल्लक्षणमष्टधा ॥ ४

॥ इत्यष्टावश्वलक्षणानि ॥

---

## ॥ दशाक्षेत्रविचारः ॥

---

दशास्तेषां दशाख्याताः क्षेत्राण्यपि दशैव हि ।
दशाक्षेत्रविभागज्ञो लक्षणं लक्षयेद्बुधः ॥ ५

त्रीणि वर्षाणि मासौ द्वौ दिनानि द्वादशैव हि ।
द्वात्रिंशदायुषो वाजी तस्यैषा कथिता दशा ॥ ६

आयुषो दशभागेन दशा प्रोक्ता मनीषिभिः ।
आद्यं क्षेत्रं विन्द्यात्प्रपानपूर्वं तथा ललाटान्तम् ॥ ७

मूर्धादिं च निगालं क्षेत्रं प्रोक्तं द्वितीयं तु ।
ग्रीवा केशस्कन्धौ क्षेत्रं विन्द्यात्तृतीयमश्वानाम् ॥ ८

जत्रुस्तथैव ककुदं काकसमंसश्चतुर्थं तु ।
पूर्वगात्रविभागः प्रोक्तं क्षेत्रं तु पञ्चमं कथितम् ॥ ९

हृत्पार्श्वे त्वथ कक्षे क्षेत्रं षष्ठं विजानीयात् ।
उदरं पृष्ठं वंशं नाभ्या सह सप्तमं क्षेत्रम् ॥ १०

रन्ध्रोपरन्ध्रे कुक्षिर्गुह्यं तथाऽष्टमं क्षेत्रम् ।
ऊरू कटिजानू च सृक्पिण्डो पाण्डुरोहिणीस्थूरौ ।
क्षेत्रं नवमं विन्द्याज्जङ्घा सखुरा तु दशममित्युक्तम् ॥ ११

॥ इति लक्षणोपोद्घाताध्यायः ॥

---

## ॥ आवर्ताऽध्यायः ॥

---

अथ तावत्प्रवक्ष्यामि पूर्वमावर्तलक्षणम् ।
यथा महीतले वायुश्चरन् वेगं तृणाङ्कुरान् ।
आवर्तरूपं कुरुते तथाऽऽवर्ता हयोद्भवाः ॥ १
आवर्तशुक्तिसङ्घातमुकुलान्यवलीढकम् ।
शतपादी पादुकार्धं पादुका चाष्टमी स्मृता ॥ २
आवर्ताकृतयश्चैता अष्टौ संपरिकीर्तिताः ।

आसां रूपं विशेषेण पुनः कथितमुत्तरे ॥ ३
तत्र प्रधानो ह्यावर्तः शुक्तिश्चापि शुभा मता ।
शतपादी पादुका च शुक्तिश्चापि षडङ्गुला ॥ ४

पादुका द्व्यङ्गुला चैव मुकुलं तद्वदुच्यते ।
विभागाङ्गुलमावर्तमानमेषामिति स्मृतम् ॥ ५

प्रासादाम्बुजचक्रतोरणधनुर्निस्त्रिंशशङ्खोपमो
निःश्रेणीयमचातुरन्तिकशशिवेताऽग्निभिः सन्निभः ।
खर्जूराङ्कुशचामरध्वजरथाङ्गाश्वत्थपत्राकृतिः
वेदीस्वस्तिकमत्स्यपूर्णकलशश्रीवृक्षस्रक्सन्निभः ॥

सूर्पाष्टापदवज्रलाङ्गलगदा चन्द्रार्धयूपाकृतिः
सृक्कूर्मातपवारणोत्पलमुखोऽनेकः प्रशस्ताकृतिः ॥
आवर्तास्तु तुरङ्गाणां ध्रुवा निन्द्याः शुभास्त्रिधा ।
तेषां ध्रुवा दश मताः स्थानानि च दशैव हि ॥ ६

उरसि द्वौ शिरसि द्वौ तथैव रन्ध्रोपरन्ध्रयोर्द्वौ द्वौ ।
एकं ललाटमध्ये विद्यादेकं प्रपाने तत् ॥ ७

एते स्वस्थानस्थाः प्रदक्षिणाः सुप्रभाः शस्ताः ।
एतैर्विना तुरङ्गः स्वल्पायुः पापलक्षणस्त्वशुभः ॥ ८



ĀVARTAS OF DIFFERENT KINDS

*See: Verse No. 6, Page No. 24*

स्थानभ्रष्टावर्तो विच्छिन्नो न प्रशस्यते वाऽपि ।
स्थानानि नवतिः षट् च तेष्वावर्तशतं स्मृतम् ॥ ९

त्रयोदश विजानीयादेते चागन्तवः स्मृताः ।
द्विविधः सङ्ग्रहस्तेषां प्रशस्तो निन्दितस्तथा ॥ १०

स्थानानि तेषां पूज्यानि निर्दिष्टानि च विंशतिः ।
षट् सप्ततिश्च निन्द्यानि इति षण्णवतिः स्मृताः ॥ ११

स्थाने द्वे सृक्विणी प्रोक्ते तयोर्द्वौ रोमजौ स्मृतौ ।
ललाटे चैव चत्वारि स्थानानि पृथगेव हि ॥ १२

तेष्वपि द्वादशावर्ता यमौ त्रेताग्नयस्त्रयः ।
त्रिभिर्निःश्रेणिका नाम चतुर्भिश्चतुरङ्गकः ॥ १३

आवर्तः पूजितो नित्यं शिरोमध्ये व्यवस्थितः ।
स्थानमेकं तु विज्ञेयं स्थाने द्वे कर्णमूलयोः ॥ १४

स्थानं निगालस्त्वेकं स्यात्कण्ठे चैकं प्रकीर्तितम् ।
केशान्तयोश्च स्थाने द्वे तयोः शुक्तिद्वयं विदुः ॥ १५

श्रीवृक्षो वक्षसि प्रोक्तो ह्यावर्तैः पञ्चभिर्भवेत् ।
अन्ये द्वे वक्षसि स्थाने चतुर्भिस्त्रिभिरेव च ॥ १६

बाह्वोः स्थानद्वयं प्रोक्तं तत्रावर्तद्वयं विदुः ।
द्वे चोपरन्ध्रयोः स्थाने द्वौ स्थितौ रोमजौ तयोः ॥ १७

एवं शुभानि स्थानानि यान्युक्तानीह विंशतिः ।
भवन्ति रोमजास्तेषु सप्तविंशतिसंख्यया ॥ १८

अथ खलु कण्ठशङ्खमन्याश्रुपातेषु नासापुटस्कन्धजानु-
स्फिग्गुदे पिण्डाण्डगण्डेषु कर्णाग्रकुक्षिस्थुरामूत्रकोशेषु वै हनुवह-
विदुकक्षोरुपार्श्वेषु पुच्छस्य मूले भ्रुवोर्मध्यभागे हयानां प्रदेशे-
ष्वथावर्तरूपद्वयं लक्षयेत् । त्रिकगलककुदुत्तरोष्ठासनप्रोथघोणासु
नाभौ हृदि क्रोडसीवन्यपानेषु वै काकसे चैकमेकं विदुर्वाजिनां
रोमजाता उपरि च कथिता प्रपानस्य चान्ये त्रयो रोमजा कुष्ठिका
कूर्चजङ्घाकलासु चैव चतुर्ष्वेव पादेषु वै षोडशावस्थिताः ॥ १९

इति षट्सप्ततिरशुभावर्ता वाजिनां मुनिप्रोक्ताः ।
सर्वेषां परिसङ्ख्याताः शतं त्रयोविंशतिश्च ॥ २०

अधुना शुभाशुभफलं स्वल्पैरवाक्षरैः प्रभूतम् ।
लक्षणमावर्तानां पृथक्पृथक्संप्रवक्ष्यामि ॥ २१

आवर्तौ सृक्विस्थौ शुक्ती वा यस्य वाजिनः स्याताम् ।
प्राप्नोति चेष्टमन्नं भर्ता पुत्रांश्च पौत्रांश्च ॥ २२

यस्याश्वस्य भवेतां ललाटजौ द्वौ प्रदक्षिणावर्तौ ।
तस्य स्वामी विजयी बहुप्रजो जयति रिपुसैन्यम् ॥ २३

यस्य त्रेताग्निनिभाः प्रदक्षिणा वै त्रयो ललाटस्थाः ।
तस्य स्वामी विजयी स तु तिष्ठति मूर्ध्नि शत्रूणाम् ॥ २४

निःश्रेणी यस्य भवेत्त्रिभिरावर्तैर्ललाटमध्ये तु ।
तेनाश्वेन तु राजा लभते विजयं धनं धान्यम् ॥ २५

सव्यावर्तैर्वाजी चतुरङ्गस्थितैर्ललाटे च ।
कुरुते स्वामिनमचिरान्महीपतिं पुत्रवन्तं च ॥ २६

आवर्तो मुकुलाभः शिरः प्रदेशे प्रदक्षिणो यस्य ।
तस्य हयस्य तु भर्ता सङ्ग्रामे जयति रिपुसैन्यम् ॥ २७

आवर्तौ वृषभाख्यौ ज्ञेयौ तुरगस्य कर्णमूलस्थौ ।
ताभ्यां स्वामी विजयी लभतेऽलङ्कारनिकरांश्च ॥ २८

आवर्तस्तु निगाले देवमणिः सर्वकामदश्चासौ ।
राष्ट्रसुतकोशसंपत्सौख्यानि विविधानि विजयं च ॥ २९

आवर्तान्हन्त्यशुभानग्रिमकाये ककुद्भवं मुक्त्वा ।
तत्रारूढो नृपतिर्जयति रणे शत्रुसैन्यानि ॥ ३०

यस्योपरन्ध्रभागे रोमावर्तः प्रजायते श्रीमान् ।
तस्य स्वामी विजयी रणमूर्ध्नि भवति शत्रूणाम् ॥ ३१

आवर्तः कण्ठस्थः शुक्तिर्वा रोचमान इत्युक्तः ।
राज्ञस्तेनाश्वेन कोशो मित्राणि वर्धन्ते पुत्राः ॥ ३२

रोचमानस्तु पूर्वार्धे निःश्रेणी शिरसि स्थिता ।
पश्चार्धे मेषली सर्वानशुभान्हन्ति रोमजान् ॥ ३३

केशान्तयोश्च शुक्ती यस्य द्वे तुरगस्य दृश्येते ।
तस्य स्वामी विजयी संवर्धते पुत्रपौत्रैश्च ॥ ३४

आवर्ता वक्षःस्थाश्चतुर्ष्वपि यस्य चत्वारः ।
कण्ठे च रोचमानः सोऽश्वः श्रीवृक्षकीनामा ॥ ३५

तेनाजौ रिपुसैन्यं विजित्य निवर्तते राजा ।
प्राप्नोत्यर्थान् सकलान् राष्ट्रं सौख्यं यशश्चैव ॥ ३६

वक्षसि यस्यावर्ताश्चत्वारस्तस्य वाजिनः स्वामी ।
प्राप्नोति रणे विजयं वित्तं निष्कण्टकं राज्यम् ॥ ३७

शुक्त्यो वक्षसि तिस्रो यस्य स्युः सर्वमानदः सोऽश्वः ।
तेनासौ विजितारिः स्वस्थो विनिवर्तते राजा ॥ ३८

बाह्वोर्यस्यावर्तौ शुक्तिर्वा सोऽङ्गदी हयः प्रोक्तः ।
प्राप्नोति तस्य भर्ता रत्नान्याभरणनिकरांश्च ॥ ४२

आवर्तो रन्ध्रोपरि यस्यास्त्येष मेखलीनामा ।
तेनैश्वर्यं भवति भवन्ति पुत्राश्च पौत्राश्च ॥ ४३

एते शुभाः प्रशस्ताः सप्तत्रिंशद्रोमजाः कथिताः ।
स्थानान्येषां विंशतिः ........... ४४

## ॥ अशुभावर्तफलम् ॥

...........अशुभानां फलमतो वक्ष्ये ।
आवर्तौ कटजौ हयस्य न शुभौ भर्तुः कुलस्यान्तकौ
भर्तुः सर्वकुलक्षयं प्रकुरुतः शङ्खोद्भवौ रोमजौ ।
आवर्तौ वहजौ हयस्य भयदौ भ्रूमध्यजौ रोमजौ ।
वित्तघ्नौ विदुमध्यजौ च सुतरां चानर्थदौ स्वामिनाम् ॥ ४५

आवर्ता हनुमन्यकूर्चगलजा स्कन्धोरुकुक्ष्युद्भवा
यस्याश्वस्य तु भर्तुरध्वनि सदा बाणौघघाती भवेत् ।
आवर्तौ हनुजौ धनक्षयकरौ मन्योद्भवौ मृत्युदौ
भर्तुर्जीवितनाशनौ तु सततं स्कन्धोद्भवौ रोमजौ ॥ ४६

आवर्तौ हृढशोकदुःखभयदौ यौ चाश्रुपातोद्भवौ
स्यातां भर्तृकुलस्य नाशनकरौ स्फिग्पिण्डजौ रोमजौ ।
आवर्तौ गलमध्यजौ गलगदं क्षुद्दुःखमृत्युप्रदौ
भर्तुर्बन्धनदुःखरोगभयदौ जङ्घोद्भवौ रोमजौ ॥ ४७

आवर्तश्चोत्तरौष्ठे यदि भवति तदा भ्रातरं हन्ति भर्तुः
प्रोथावर्ती तुरङ्गः सकलकुलमसौ नाशयत्याशु भर्तुः ।
कक्षावर्तः शरौघैः परिकरसहितं स्वामिनं हन्ति शीघ्रं
घोणावर्तश्च भर्तुर्जनयति तुरगः कश्मलं मृत्युमाशु ॥ ४८

गण्डावर्तस्तुरङ्गो भयशतजननः स्वामिनो मृत्युदूतः
जान्वावर्तस्तुरङ्गः क्षपयति सकुलं स्वामिनं तीव्रशोकैः ।
प्रायश्चौरादिशस्त्रानलविषभयदः स्यान्महादोषसंज्ञः
शालायां न प्रवेश्यो नरपतिमचिराच्चालयत्याशु राज्यात् ॥ ४९

आवर्तमश्वस्य ककुद्भवं तं
विन्द्यान्महादोषतमं सुरौद्रम् ।
स यस्य वाजी सकुलस्य तस्य
वित्तक्षयो राज्यविनाशनं च ॥ ५०

तं न स्पृशेदुद्धृतहणं न पश्ये
देवद्विजेभ्यस्त्वचिरेण दद्यात् ।
निष्कासयेद्वापि च जातमात्रं
शीघ्रं त्यजेद्वापरराष्ट्रमध्ये ॥ ५१

स्याद्रोमजो यस्य तु काकसोद्भवः
तस्यापि भर्ता सह तेन वाजिना ।
आजौ हतः काकशतैश्च भक्ष्यते
उत्क्रोशयद्भिर्गुरुभैरवस्वरैः ॥ ५२

पार्श्वोद्भवौ यस्य हि रोमजौ तु
भर्ता स पक्षस्तुरगस्य तस्य ।
आशु क्षयं याति यथा निदाघे
स्पृष्टं जलं भास्कररश्मिजालैः ॥ ५३

क्रोडोद्भवस्त्वासनमध्यजो वा
स्याद्रोमजो यस्य तुरङ्गमस्य ।
स स्वामिनं हन्त्यचिरादवश्यं
मार्गे स्थितं राजकुले रणे वा ॥ ५४

कर्णावर्तो भर्तुः कर्णच्छेदं च कर्णमूले वा ।
मध्यस्थः स्वामिवधं त्रयः प्रमाणोपरि स्थिता ह्येते ॥ ५५

नासापुटयोर्भर्तुर्वित्तविघातं ध्रुवं कुरुते ।
कुर्याद्धृदयावर्तो हृदि शोकं बन्धनं मरणम् ॥ ५६

उपरि स्थितः प्रपाणे प्रदक्षिणोऽश्वस्य रोमजो यस्य ।
भर्तुः पितरं हन्यात्कुर्याद्वा भ्रातृवधं च शुचम् ॥ ५७

आवर्ताः सीवन्यां येषां कुक्षावपानदेशेषु ।
ते कुक्षिव्याधिकरा भर्तुर्न सुखावहाः कथिताः ॥ ५८

दृष्टौ यस्यावर्तौ पुच्छस्य मूले तु सञ्जातौ ।
भर्ता तस्य सशल्यो बाणहतः सन्त्यजेत्प्राणान् ॥ ५९

भर्तुर्दशनाकर्षौ रोमजौ यस्य मूत्रकोशस्थौ ।
मुष्कोद्भवौ च विन्द्याज्ज्येष्ठसुतघ्नं च रोमजौ नूनम् ॥ ६०

नाभौ यस्यावर्तास्तस्य तु भर्ता चिरं ससन्तानः ।
रोगैर्जलोदराद्यैः पीड्येत च नात्र सन्देहः ॥ ६१

त्रिकजो यस्यावर्तः सह भर्त्राऽसौ रणे त्यजेत्प्राणान् ।
खुरजौ यस्यावर्तः स वध्यते स्वामिनैव सह ॥ ६२

यस्याश्वस्यावर्ताः संभूताः कुष्ठिकासु दृश्यन्ते ।
भर्ता तस्य व्यसनैः सुदारुणैः पीड्यते सततम् ॥ ६३

॥ इत्यशुभावर्तफलम् ॥



NIŚŚREṆIKA

*See : Verse No. 13, Page No. 25*



CATURANGA

*See . Verse No. 13, Page No. 25*

## ॥ आवर्ताध्यायः प्रक्षिप्तः ॥

......................

शतपादीति विख्याता तथा वै मुकुलोऽपरः ।
आवर्तश्चैव संघातः पादुका चार्धपादुका ॥ ६०

शुक्तिश्चैवावलीढश्च आवर्तः कीर्तितोऽष्टधा ।
वाजिदेहगताः सम्यक्शुभाशुभनिवेदिनः ॥ ६१

शतपादीसमाकारा शतपादी निवेदिता ।
जातीकुसुमसङ्काशो मुकुलस्समुदाहृतः ॥ ६२

आवर्तो भ्रमितो वालैस्संघातो रोमपुञ्जकः ।
शुक्तिश्च शुक्तिसंस्थाना रोमभिर्व्यक्तलक्षणैः ॥ ६३

एतेषामवलीढस्तु अवलीढः प्रकीर्तितः ।
पादुका पादुकाकारा तथा चैवार्धपादुका ॥ ६४

वालैर्विशेषसंस्थानैर्निर्दिशेन्मतिमान् भिषक् ।
शास्त्रमार्गानुसारेण यथा प्रोक्तं तपोधनैः ॥ ६५

एतेषामेव सर्वेषामावर्तानां विचक्षणैः ।
रोमजेति कृता सञ्ज्ञा वाजिलक्षणकोविदैः ॥ ६६

शुभाशुभौ तु यत्र द्वौ तत्रैको न फलप्रदः ।
एकं हेम्ना दहेत्पापं तेन दोषो न विद्यते ॥ ६७

श्रीवृक्षो रोमजश्चैव रोचमानस्तथैव च ।
अङ्गदी मेखली चैव राज्यरत्नप्रदाः सदा ॥ ६८

प्रपाणे मारुतं विन्द्याल्ललाटे च हुताशनम् ।
उरसि त्वश्विनौ देवौ चन्द्रसूर्यौ च मूर्धनि ॥ ६९

रन्ध्रे स्कन्दविशाखौ च उपरन्ध्रे हरीश्वरौ ।
इत्येवं पूजिता ह्येते दशावर्तास्तु वाजिनाम् ॥ ७०

एष्वेकेन विहीनाश्च भवेयुरशुभप्रदाः ॥

॥ इत्यावर्ताध्यायः ॥

---

## ॥ मिश्रितलक्षणाध्यायः ॥

सर्वाङ्गलक्षणं प्रोक्तं तुरङ्गाणां विशेषतः ।
मन्दबुद्धिप्रबोधार्थं मिश्रितं प्रोच्यतेऽधुना ॥ १

श्वेतः श्वेतशफः सिताक्षिवदनः श्वेताण्डमेढ्रस्तथा
श्वेतत्वक्सितकेसरः सितगुदः सिंहेभशंखस्वरः ।
सर्वव्यञ्जनपूजितः शुभगतिः संस्थानवान् सुप्रभः
चावर्तैश्च शुभैर्हयो हि निवसेद्राष्ट्रेऽपि यस्येदृशः ॥ २

राज्ञस्तस्यारिबलं हतशेषं क्वापि याति वित्रस्तम् ।
धर्मार्थकामसंपत्सङ्ग्रामे तस्य विजयः स्यात् ॥ ३

तं गृह्णीयात्तुरगं सर्वस्वेनापि तस्य नास्त्यत्यर्थः ।
अचिरात्तेन नरेन्द्रः पृथ्वीं निष्कण्टकं भुंक्ते ॥ ४

जठरे श्वेतः पुत्रान् कुक्षौ श्वेतो ददाति चानन्दम् ।
ग्रीवायां चापि धनं सौभाग्यं वै त्रिके दद्यात् ॥

वामे पार्श्वे वित्तं दद्यादथ दक्षिणे धनं दारान् ।
सौख्यं वक्षसि दद्यात् श्वेतः पृष्ठे मुखे विजयम् ॥ ५

कर्णौ यस्य सितौ शफाश्च चरणाः शोणस्य कृष्णस्य वा
सोऽश्वः सर्वसुखप्रदो नरपतेः सौभाग्यसंपत्करः ।

स्निग्धं रक्तमतीव लक्षणयुतं चाश्वे नृपः प्राप्नुयात्
तस्याजौ विजयं सुखं च परमं वित्तं प्रभूतं भवेत् ॥ ६

सुपक्वजम्ब्वाभमरिष्टसन्निभं योऽश्वं समारोहति युद्धकाले ।
भूतानि सर्वाण्यपि तस्य नूनं भवन्ति वश्यानि सदा नृपस्य ॥ ७

अष्टौ सिता यस्य भवन्ति वाजिनः
वक्षश्च पुच्छं च शिरो मुखं शफाः ।
विन्द्यात्तुरङ्गं हितमष्टमङ्गलं
भर्तुर्यशो राज्यसुखप्रदं सदा ॥ ८

नीलैश्च रक्तैश्च सितैश्च पीतैः
कृष्णैश्च मिश्रैस्त्वथवा विचित्रैः ।
यो मण्डलैर्भूषितसर्वकायः
स स्वामिनो वैजयिकोऽश्वमुख्यः ॥ ९

धन्योऽयमश्वः स तु पुण्यदर्शनः
राज्ञः सदा क्षेमकरोऽर्थसाधकः ।
यस्मिंस्तु देशे निवसेत्तुरङ्गमः
तत्राग्निरुक् शस्त्रभयं न जायते ॥ १०

यः परिणद्धो वाजी मध्ये स्निग्धेन शुक्लपदेन ।
सन्नद्धो नाम्नाऽसौ विमर्दनः शत्रुसैन्यानाम् ॥ ११

यः कृष्णः परिणद्धः स्यान्मध्येन लोहितेन पट्टेन ।
सन्नद्धः सोऽपि हयः पूर्वोदिष्टं फलं तस्य ॥ १२

यः कृष्णः शोणो वा सितेन जठरेण वक्षसा वाऽपि ।
वैजयिकः सतु वाजी धन्यः सर्वार्थसिद्धिकरः ॥ १३

कालो वा रक्तेनोदरेण रक्तेन वक्षसा वापि ।
फलमेतदेव भर्तुर्ददाति पूर्वं समुद्दिष्टम् ॥ १४

कट्यां यः परिणद्धस्तुरङ्गमो वाससा सितेनेव ।
संवीती नामासौ सङ्ग्रामे सर्वशत्रुघ्नः ॥ १५

वदनं पृष्ठं वाला यस्य श्वेतास्त्वमित्रधर्षणो नाम ।
विजयार्थं नरपतिना पुरतः कार्यः स सैन्यस्य ॥ १६

आनेत्राभ्यां च शिरः स श्रवणान्तं पाण्डुरं भवद्यस्य ।
सर्वार्थकामदोऽसौ हयः शिरः प्रावृतो नाम ॥ १७

श्वेतस्याश्वस्य शिरः श्वेततरं यस्य लक्ष्यते स्निग्धम् ।
भर्तुः सर्वार्थकरः ससूर्यकान्तः समुद्दिष्टः ॥ १८

ये ह्रस्वमण्डलैः स्युस्तुरगा विभक्तचित्राङ्गाः ।
परसैन्यमर्दनास्ते विज्ञेया नागजातीयाः ॥ १९

यः कृष्णः श्वेतवर्णैस्त्वथ कनकनिभैर्मञ्जुगुञ्जानिभैर्वा
केशैः स्निग्धस्तुरङ्गस्त्वथ कमलनिभैरर्थदः स्वामिनोऽसौ ।
कृष्णोऽश्वः श्वेतवक्षा सितवदनशफः श्वेतवालाक्षिपृष्ठः
ज्योतिष्मान्नाम धन्यः सकलवसुमतीराज्यरत्नप्रदोऽसौ ॥ २०

अच्छेद्यकीर्तिः कथितो रोमभिराच्छादितैः खुरैर्वाजी ।
भर्तुरचिरेण दद्यात् विभवं पुत्रांश्च पौत्रांश्च ॥ २१

सितास्तु यस्य वाजिनः शफाः समस्तकं मुखम् ।
स पञ्चभद्रको भवेन्नृपस्य राज्यसौख्यदः ॥ २२

एकोऽपि यस्य वर्णः सुस्निग्धः सुप्रभः स्थिरोऽश्वस्य ।
प्राप्नोति तस्य गुर्वीमद्वन्द्वां वै श्रियं भर्ता ॥ २३

नाभिं समादाय तुरङ्गमस्य
बालार्कवर्णं यदि पूर्वमर्धम् ।
स्यात्पश्चिमार्धं हरिणाङ्कवर्णं
शरीरवैद्यद्युतिसंयुतं च ।
स स्वामिनो राष्ट्रविवर्धनोऽसौ
भवेद्दिवा वैजयिको वराश्वः ॥ २४

शशाङ्कवर्णं यदि पूर्वमर्धं
बालार्कवर्णं यदि पश्चिमार्धम् ।
शरीरसत्त्वद्युतिसंयुतः स
नाम्ना निशा वैजयिकः स वाजी ।
राज्ञः सदा राष्ट्रविवर्धनोऽसौ
सौभाग्यदो गोत्रविवर्धनश्च ॥ २५

एवं तु कृष्णा हरयश्च नित्यं
शुक्लार्धकायास्तुरगाः प्रशस्ताः ।
शत्रुश्रियं तेऽपि न वर्धयन्ति
रणे रतः स्वस्य जयं चक्रुः ॥ २६

सितपादमुखो यस्तु आवर्तैः कुत्सितैरपि ।
षट्पदाभो भवेद्यस्तु कृष्णतालुर्न दुष्यति ॥ २७

त्रिपृथुस्त्रिलघुस्त्रिमृदुस्त्रिमहान्
त्रितनुस्त्रिषु दीर्घ इति प्रथितः ।
स तु सर्वशरीरसुभप्रवर-
स्तुरगः सुखराज्यविभूतिकरः ॥ २८

वक्षो ललाटं जघनं हयानां
त्रीणि प्रशस्तानि पृथूनि विन्द्यात् ।
पृष्ठं च कर्णावथ कुष्टिका च
ह्रस्वानि वै त्रीणि शुभानि विन्द्यात् ॥ २९

वालाश्च रोमाणि च केसरं च
त्रीणि प्रशस्तानि मृदूनि विन्द्यात् ।
आस्यं च नेत्रं च शिरो हयानां
त्रीणि प्रशस्तानि महान्ति विन्द्यात् ॥ ३०

ओष्ठौ च जिह्वा त्वथ सृक्विणी च
त्रीणि प्रशस्तानि तनूनि विन्द्यात् ।
ग्रीवाथ जङ्घे वदनं हयानां
त्रीण्येव दीर्घाणि शुभानि विन्द्यात् ॥ ३१

शशधरतुहिनाभा हंसमुक्ताफलाभाः
द्रुतकनकसवर्णाः पद्मकिञ्जल्कवर्णाः ।
अभिनवकुमुदाभाः किंशुकाभाः शुकाभाः
विकचकुवलयाभा इन्द्रनीलेभनीलाः ॥ ३२

भृङ्गाभाः कोकिलाभा सजलजलधरारिष्टभिन्नाञ्जनाभा
बालार्काशोकपुष्पस्तबकविकासिताम्भोजलाक्षारसाभाः ।
इत्थंभूतास्तुरङ्गा नृपवरगदिता राष्ट्रधीराः सुवाहाः
दीर्घग्रीवाः सुपार्श्वाः पृथुनयनकटिस्कन्धवक्षोललाटाः ॥ ३३

ह्रस्वैः पृष्ठाण्डकर्णैः कठिनखरखुरा दीर्घनिर्मांसजङ्घाः
सूक्ष्मत्वग्रोमवालामृदुतनुरसनाप्रोथसृक्वौष्ठकेशाः ।
शुद्धावर्तस्वरूपा घनसितदशनाः सुप्रभाः शुद्धसत्त्वाः
येऽप्यन्येऽपीदृग्विधाः स्युः जननयनमनोनन्दनाः स्निग्धवर्णाः ।
तेषां राजन् खुराग्रे निवसति कमला सर्वदा वीरभोग्या
त्यक्त्वा क्रीडां समुद्रे जलशयनमुपेन्द्रस्य वक्षःस्थलस्था ॥ ३४



ĀVARTAS IN FOREHEAD
*See : Verse No. 23, Page No. 27*



ĀVARTAS IN FOREHEAD
*See : Verse No. 24, Page No. 27*



VṚṢABHĀVARTA
*See : Verse No. 28, Page No. 27*

जलधरमधुकरकोकिलविकसितकुमुदेन्दुचन्द्रिकातुल्याः ।
सुरसरिदुदकच्छायास्तुहिनाचलकान्तिभास्वराकाराः ॥ ३५

तरुणदिवाकरसदृशा रक्ताम्बुजदलसमानवर्णा वा ।
कनकनिभकान्तिरुचिरा वर्णाः प्रोक्तास्तु राजवाहानाम् ॥ ३६

चक्षुःप्रीतिकरं मनोगुणहरं वर्णप्रभाभास्वरं
स्वावर्तं घनपीनबाहुयुगलं सारङ्गसिंहेक्षणम् ।
पिण्डे संघटितं च पृष्ठविततं मानप्रभावोन्नतं
सर्वाङ्गेषु समस्तलक्षणधरं तेजस्विनं वेगिनम् ॥ ३७

सुच्छायं सुमनोज्ञगन्धसलिलं गम्भीरहेषान्वितं
सन्नाह्यं नृपवाहनं निगदितं माङ्गल्यदोऽयं हयः ॥ ३८

ईदृशं कुरु राजेन्द्र त्रिवर्गफलदायकम् ।
शत्रून्विजेतुं सङ्ग्रामे माङ्गल्यारोहणं हयम् ॥ ३९

अथ कनकनिभस्तुरङ्गश्रियं कस्यापि कुर्याच्छशाङ्कोपमः शत्रुनाशं तथैवातसीपुष्पवर्णस्तु भर्तुर्जयं सारसाभः परामर्थसिद्धिं च कुर्यात् । रणे वाजिनः कुर्युरेकस्य कस्याप्यसारस्य भर्तुर्जयं दीर्घमप्राकृतं क्रौञ्चपत्रैकवर्णेन चैवं तथा कौक्कुटेनापि राजा रणे शत्रुपक्षं जयेत् ॥ ४०

तालुमुष्कौ खुराश्चैव पुच्छं शिरो लोचने मोहनं श्वेतवर्णस्य कृष्णानि यस्य स्युरेतानि तं वर्जयेत्कोशनिर्नाशनं वाजिनस्त्वन्य-वर्णस्य शुक्लान्यथैतानि शस्तानि तेनारिपक्षः क्षयं याति मित्राणि कोशश्च संवर्धते स्वामिनस्त्वेवमेतच्छुभम् ॥ ४१

अथाङ्गारवर्णास्तथा पक्कतालैः सवर्णाः सृगालोपमाः कोलवर्णाः । कपोताभ्रवर्णास्तथैवाखुवर्णा हयाः काकतुण्डोपमा धूमवर्णाः वृको लूकवर्णा अधन्या अशस्ता अनारोग्यदा भर्तुरेते परं द्वादशैवं हयाः शुक्लवर्णाश्च केचित्तथा पाटना ये च गौरा हयाः कृष्णताल्वाक्षिमुष्काः खुरैश्चैव वालैश्च कृष्णैर्गृहे यस्य तिष्ठन्ति वै क्षीयते कोशराष्ट्रं च तस्य पादेन रक्तेन कालेन वा श्वेतवर्णस्य शोणस्य चिह्नं भवेद्यस्य नद्धं तुरङ्गस्य स्वामिनं घातयत्याहवे यस्य शोणस्य मध्यस्तु कालेन पादेन नद्धो भवेत्सोऽपि वाजी रणे स्वामिनं घातयेत् ॥ ४२

॥ इति मिश्रितलक्षणाध्यायः ॥



PUṆDRAS (*Marks on the Forehead*)

## ॥ पुण्ड्रलक्षणाध्यायः ॥

अत ऊर्ध्वं प्रवक्ष्यामि पुण्ड्राणां लक्षणं शुभम् ।
प्रपाणोर्ध्वं तु कर्णाधः श्वेतं श्वेततरं च यत् ।
तत्पुण्ड्रमिति विज्ञेयं तस्य संस्थानतः फलम् ॥ १

कमलदलकलशहलमुसलपताकाध्वजाङ्कुशादर्शैः ।
श्रीवृक्षशङ्खछत्रस्वस्तिकभृंगारवज्रनिभैः ॥

चामरकूर्माष्टापदवेदीखड्गोपमैर्हयाः ।
पुण्ड्रैः कथयन्ति जयं भर्तुर्विभवं पुत्रांश्च पौत्रांश्च ॥ २

चतुरश्रैर्हयाः पुण्ड्रैः सर्वश्वेतमुखाश्च ये ।
पुण्ड्रं खड्गोपमं यस्य स तु धन्यतमः स्मृतः ॥ ३

अथ स्वस्थस्तु पुण्ड्रश्च सर्वकामफलप्रदः ।
कामार्थसिद्धिदो भर्तुर्भूयाच्छ्रेष्ठस्तु कक्षया ॥ ४

अथ तिर्यगायतेन हि वित्तभ्रंशं विजानीयात् ।
कल्माषेण क्लेशं शूलकबन्धोपमेन दुःखं च ॥ ५

अथ पाशश्रृङ्खलाभेन पुण्ड्रेण बन्धनं भर्तुः ।
एतानि तुरङ्गाणां पुण्ड्राणि शुभाशुभानि कथितानि ॥ ६

प्रोथे पुण्ड्रं प्रपाने च वामपार्श्वे च नेष्यते ।
कण्ठघण्टाश्रिते पुण्ड्रे वर्जनीयस्तुरङ्गमः ॥ ७

जिह्वाकल्माषरूक्षाणि विचित्राणि तनूनि च ।
पुण्ड्राणि न प्रशस्यन्ते पीतरक्तासितानि च ॥ ८

धन्याधन्यान्यन्यानि ललामरूपाणि वक्ष्यन्ते ।
श्वेतं ललाटमध्ये तारारूपं हयस्य यद्भवति ॥ ९

तत्तु ललामं विद्यात्फलं तु संस्थानतस्तस्य ।
चन्द्रार्धचन्द्रदिनकरतारावद्द्योतते ललामं तत् ॥ १०

यस्य तुरगस्य भवेत्तस्य स्वामी भवेद्राजा ।
पटहाकृति च ललामं काकपदं भवति यच्च विचित्रम् ।
वामस्थं वाऽधस्ताद्वित्तविनाशाय निर्देश्यम् ॥ ११

उक्तं च शालिहोत्रेण —

एवं पुण्ड्रविकल्पास्तु शृणु चिह्नैश्च चिह्नितान् ।
शिरःकर्णाक्षिकेशेषु वामपादोदरानने ॥ १२

वर्णान्यत्वं भवेद्यस्य तैश्चिन्हैश्चिन्हितं विदुः ।
तमारुह्य हयं राजा सपत्नान् जयते रणे ॥ १३

श्रुतौ ललाटे घोणायां मस्तके ककुदे त्रिके ।
भ्रुवोः कर्णाग्रयोः प्रोथे मेहनाग्रे च वालधौ ॥ १४

वर्णाः परो यस्य भवेद्ध्रयदोऽश्वः प्रकीर्तितः ।
ध्वजिनं तं समारुह्य भग्नो राजा निवर्तते ॥ १५

॥ इति गणग्रन्थे गणकृते पुण्ड्राध्यायः ॥

---

## ॥ पुष्पलक्षणम् ॥

---

आगन्तवस्तुरङ्गस्य ये भवन्त्यन्यवर्णकाः ।
तेषां प्रदेशभेदेन लक्षणं यद्व्यवस्थितम् ॥ १

तत्तथैव समासेन विस्पष्टं क्रियतेऽधुना ।
प्रपाने च ललाटे च कण्ठे मूर्धनि कर्णयोः ।
निगाले चैव केशान्ते पुष्पं धन्यतमं स्मृतम् ॥ २

स्कन्धे वक्षसि कक्षे च मुष्कयोर्बाहुके मुखे ।
हनौ पृष्ठे च वाहानां पुष्पं स्वामिहितप्रदम् ॥ ३

नाभौ केशे तथा कण्ठे दन्ते चैव हि वाजिनाम् ।
पुष्पं धन्यतमं प्रोक्तं भर्तुः सर्वार्थसाधकम् ॥ ४

अप्रशस्तानि दृष्टानि मुनिभिर्यानि शास्त्रतः ।
तानि सम्यक्प्रवक्ष्यामि पुष्पाण्यन्यानि दर्शनात् ॥ ५

अधरोष्ठे कटौ प्रोथ उत्तरोष्ठे तथैव च ।
घोणायामण्डयोश्चैव शङ्खयोश्च तथा भ्रुवोः ॥ ६

ग्रीवायां चैव बाह्वोश्च सृक्विण्योर्जठरे स्फिजि ।
पायौ क्रोडे च पुष्पाणि निन्दितानि विनिश्चितम् ॥ ७

रक्तं पीतं तथा कृष्णं पुष्पं सर्वत्र नेष्यते ।
शुभप्रदेशसंजातं भवेत्साधारणं ततः ।
सर्वाङ्गपुष्पितो वर्ष्ं परित्याज्यो न संशयः ॥ ८

बिन्दवो येऽन्यवर्णा हयस्यान्यवर्णस्य ते पुष्पसंज्ञाः हयैः पुष्पितै राष्ट्रलाभो ; ललाटे तु वित्तं ; निगालेऽन्नपानं ; तथा वामकर्णे सुतोत्पत्तिरुक्ता ; खुरे पुष्पिते मित्रवृद्धिः ; तथा वक्षसि स्कन्धदेशे च सेनाधिपत्यं ध्रुवं ; मूत्रकोशे सुतोत्पत्तिरश्वस्य ; भर्तुर्भवेत्पक्षयोः पक्षवृद्धिर्भवेत्सृक्कयोरन्नपानं ; तथा रन्ध्रयोर्वित्तलाभं परां निर्वृतिं ; कण्ठदेशे सुतांश्चैव ; केशान्तयोर्मित्रवृद्धिं ; तथा मुष्कयोरंसयोः पुत्रलाभं तु वृद्धिं ; हयाः पुष्पिताः स्वामिनः संप्रकुर्वन्ति सर्वाङ्गजातैः सुपुष्पैः सितैः पूजितैर्वाजिनः पूजिताः सर्वकामार्थदाः ।

एवमेतानि पुष्पाणि सर्वेषु वर्णेषु शुक्लानि शोणेषु रक्तानि पीतेषु वर्णेषु वा तानि शस्तानि; अथ खलु जठरे गले शङ्ख्योः पुष्पिताश्वाः प्रकुर्वन्ति भर्तुः सदा क्षुद्भयं कुक्षिकक्षाभयं मृत्युमेवं ककुत्काकसे पृष्ठमन्याश्रुपातेषु वैराणि कूर्चेषु भर्तुः सदैवाध्वपीडामपाने तथा पुच्छमूले तु सर्वार्थनिर्नाशनं जङ्घयोर्बन्धनं शये पुत्रमृत्युं जयं चैव जान्वोः कटे चैव गात्रक्षयं घण्टयोः कुष्ठिकभ्रूकटिं क्रोडपिण्डेषु पुष्पाण्यशनिरूक्षानि सर्वत्र नेष्टानि । सुस्निग्धरूपाणि तस्मात्प्रशस्तानि वै श्वेतवर्णस्य पुष्पाणि रक्तानि पीतानि वै सर्वेषु वर्णेषु कृष्णानि पुष्पाणि कुर्वन्ति भर्तुर्वधं बन्धनं अग्रदशनेषु येषां पुष्पाण्यधरेषु शुक्लानि ते तु दिवसैर्मासैः सप्ताभिरर्थप्रदा भर्तुः ॥ ९

शुभमशुभवदुक्तं पुष्पाणां लक्षणं तुरङ्गाणाम् ।

॥ इति गर्गकृते गणनामग्रन्थे पुष्पवर्णनाध्यायः ॥

## ॥ अथ हेषितशुभलक्षणम् ॥

दृष्ट्वा हि पूर्णपात्रं च ब्राह्मणं कुसुमानि च ।
दधि चापि समालोच्य वाहानां हेषितं शुभम् ॥ १

वादित्रध्वानिमाकर्ण्य हेषन्ते यदि वाजिनः ।
ग्रासपूर्णमुखाश्चैव तदा भर्तुर्जयो भवेत् ॥ २

बाले च निर्गते वृद्धे क्षुधिते च पिपासिते ।
श्रान्ते पीते तथा वाहे न ग्राह्यं स्वरलक्षणम् ॥ ३

ध्वजाग्रं चैव सूर्यं च पश्यन्तो वाजिनो यदा ।
हेषन्ते चाहवे स्पष्टं तदा विन्द्याज्जयं प्रभोः ॥ ४

वक्ष्यामि हेषितानां लक्षणमधुना समासेन ।
नाभीदेशादूर्ध्वं वायोः प्राणस्य धावतो हृदये ।
कण्ठे शिरसि च घाताच्छब्दस्तद्धेषितं विन्द्यात् ॥ ५

गंभीरस्तु महान्स्वरः सुमधुरः स्निग्धो घनः संहतः
सिंहव्याघ्रगजेन्द्रदुन्दुभिघनः क्रौञ्चस्वराभः शुभः ।
येषां ते तुरगाः यशोऽर्थसुखदाः सौभाग्यराज्यप्रदाः
सङ्ग्रामे विजयं च तैः सह शुभं सैन्यं च संवर्धते ॥ ६

विच्छिन्नस्तनुरूक्षजर्जरखरक्षामस्तथा गद्गदः ।
तुल्यो ध्वांक्षवराहजंबुकखरोष्ट्राणां न शस्तः स्वरः ॥ ७

॥ इति हेषितलक्षणम् ॥



"DEVA MANI" IN NIGĀLA

*See: Verse No. 29, Page No. 27*

## ॥ अथ गन्धलक्षणम् ॥

एतद्द्वेषितलक्षणं निगदितं गन्धोद्भवं वक्ष्यते
स्रोतःस्वेदपुरीषमूत्रमुखजान् गन्धान्विदुर्वाजिनाम् ॥ १

कमलकुसुमसर्पिश्चन्दनक्षीरगन्धा
दधिमधुकुटजानां चम्पकस्यन्दनानाम् ।
अगरुगजमदानां तद्वदेवार्जुनानां
मधुसमयवनानां पुष्पितानां च गन्धाः ॥ २

पुन्नागाशोकजातीसरसकुवलयोशीरपत्राम्रगन्धाः
पानीयप्रोक्षितोर्वीकुसुमितबकुलामोदिनो ये च वाहाः ।
धन्याः पुण्या मनोज्ञाः सुतसुखधनदाः भर्तुरानन्ददास्ते
माङ्गल्याः पूजनीयाः प्रमुदितमनसो राजवाहास्तुरङ्गाः ॥ ३

श्वपचकुमठगन्धा मत्कुणासृक्सगन्धा
खरकरभवराहोलूकविण्मूत्रगन्धाः ।
मललशुनसगन्धा मत्स्यपित्ताण्डगन्धा
अशुभफलकरास्ते वर्जनीया हयानाम् ॥ ४

॥ इति गन्धलक्षणम् ॥

## ॥ छायालक्षणम् ॥

---

मेघावली यथार्कं गगनस्थं छादयेत्तथा छाया ।
छादयति सकललक्षणमश्वशरीरे समुद्भूताः ॥ १

सा छाया पञ्चविधा पृथ्वीजा वारुणी तथा सौरी ।
वायव्या चैव भवेत्तुरगाणां नाभसी त्वपरा ॥ २

स्निग्धा स्थिरा च महती वर्णैर्नानाविधैः सुगम्भीरा ।
नयनमनोह्लादकरी प्रशस्यते पार्थिवी छाया ॥ ३

ससलिलजलधरतुल्या सरोरुहाभा प्रसन्नसलिलाभा ।
स्निग्धा स्थिरा प्रशस्ता विज्ञेया वारुणी छाया ॥ ४

बालार्कविद्रुमाभा लाक्षारसपद्मरागकमलाभा ।
आग्नेयी दीप्तिमती छाया शस्ता तुरङ्गाणाम् ॥ ५

परुषा भिन्ना दीना वायव्या निन्दिता छाया ।
रूक्षा चपला तन्वी वायव्योक्ता नाभसी चेष्टा ॥ ६

तिस्रः श्रेष्ठाः पूर्वा अन्ये द्वे निन्दिते महामतिभिः ।
तासां लक्षणमेतच्छुभाशुभं संप्रवक्ष्यामि ॥ ७

स्नातस्य पीतस्य तथाऽपराह्णे
सुप्तोत्थितस्यापि तुरङ्गमस्य ।
भुक्तस्य नित्यं हयलक्षणज्ञैः
छाया परीक्ष्या तु शुभाशुभा वै ॥ ८

---

## ॥ अथ जयदत्तप्रोक्तं छायालक्षणम् ॥

---

छाया वाजिशरीरेषु शुभाशुभनिवेदिनी ।
वाजिनश्च प्रभोश्चैव तां ब्रवीम्यनुपूर्वशः ॥ १

सुस्निग्धा पृथिवी छाया नानाद्युति समन्विता ।
पद्मरागारुणा चैव आग्नेयी परिकीर्तिता ॥ २

शुद्धस्फटिकसंकाशा सुस्निग्धा चैव वारुणी ।
रूक्षा दीना च वायव्या परुषा चैव निन्दिता ॥ ३

॥ इति शुभाशुभछायालक्षणम् ॥

---

## ॥ अथ गतिलक्षणम् ॥

विभक्तैः पदविन्यासैः नात्युच्चैर्ललितैः समैः ।
चक्षुर्मनोह्लादकरी या गतिः सा शुभा मता ॥ १

वक्रा स्खलिता विषमा ब्राह्मशफा भ्रष्टसौष्ठवा विकृता ।
अतिविकटा सङ्कीर्णा गतिरत्यूर्ध्वा च न शस्ता ॥ २

शिखिनकुलवृषोष्ट्रव्याघ्रसिंहेभतुल्या
शरभगतिसमाना वानराणां च तुल्या ।
मृगवरगतितुल्या सद्गतिर्यस्य सोऽश्वो
जयसुखविभवानां वर्धनः पार्थिवस्य ॥ ३

## ॥ सत्त्वलक्षणम् ॥

त्रिविधं सत्त्वं शुद्धं राजसमथ तामसं ततस्तेषाम् ।
भेदास्तु सप्त षट् त्रय एवं ह्यनेकशोऽभिहिताः ॥ १

ब्राह्मं तथार्षमाहेन्द्रं याम्यकौबेरवारुणान्येव ।
शुद्धान्येतानि षट् तु गान्धर्वं सप्तमं चैव ॥ २

आसुरराक्षसपैशाचसार्पपैत्राणि शाकुनं चैव ।
षड्राजसानि नूनं त्रीण्येवात्र तामसानीति ॥ ३

पाशवमात्स्यवैरुधमेवं सत्त्वानि षोडशैवैतानि ।
कथितान्युत्तममध्यमाधमानीति त्रिधा क्रमेणैव ॥ ४

कामादपेतः स्मृतिमानकोपी
स ब्रह्मसत्त्वः शुचिनिर्जितात्मा ।
द्वेषो न रोगो न मदो न मोहः
स्याद्यस्य वै तं मुनिसत्त्वमाहुः ॥ ५

तेजस्विनः सर्वविभूतियुक्तं
एवंविधव्यञ्जनमैन्द्रसत्त्वम् ।
मायाविमुक्तं गतरागमोहं
तं याम्यसत्त्वं मुनयो वदन्ति ॥ ६

व्यक्तप्रसादकोपः कामी स्मृतिमान्कुबेरसत्त्वोऽश्वः ।
ऐश्वर्यशौर्यस्मृतिसौख्यकेलीशीलो हरिर्वारुणसत्त्वसंस्थः ॥ ७

सङ्गीतवाद्यपूजाप्रियस्तु गन्धर्वसत्त्वोऽश्वः ।
रौद्रः शूरश्चण्डो वाजी स्यादसुरसत्त्वस्तु ॥ ८

मेढ्रप्रहारी च महाशनश्च
स्वापप्रियो राक्षससत्त्व एषः ।
भीरुस्त्वशोच्यश्च महाशनश्च
पैशाचसत्त्वश्च भवेत्तुरङ्गः ॥ ९

क्षिप्रप्रकुपितभीरुः शुचिर्हयो नागसत्त्वश्च ।
दुःशीलः पितृसत्त्वः प्रियासनो दुरुपचर्यस्तु ॥ १०

सतताहारैर्मैथुनभ्रूचापल्यैश्च शाकुनं सत्त्वम् ।
क्षुज्जाड्यभयालस्यैः पाशवसत्त्वं विजानीयात् ॥ ११

आहारार्तो भीरुर्जलप्रियो मत्स्यसत्त्व इत्येषः ।
निद्राध्यानालस्यैः वीरुधसत्त्वं विजानीयात् ॥ १२

॥ इति सत्त्वलक्षणम् ॥

## ॥ महादोषाध्यायः ॥

मिश्रकं लक्षणं प्रोक्तं महादोषोद्भवं शृणु ।
पुंसां प्राणहरा मे च महादोषतमास्तथा ।
नामतः फलतश्चैव प्रवक्ष्याम्यनुपूर्वशः ॥ १

असितविषमदन्तः शुक्तिदन्तः कराली
तथा हीनदन्तो हयो भग्नदन्तः ।
च्युतैश्च द्विजैश्चाथ एकारदन्तः
ककुज्जानुहत्काकसावर्तिनश्च ॥ २

वृषभदशनयुक्ता ये च जाता दिने च
दीनाधिकाङ्गैकमुष्कास्त्रिमुष्काः ।
तथा लम्बमुष्काः कपेः सन्निभौ यस्य
मुष्कौ भवेतां तथा रोमशौ बिन्दुभिश्चित्रितौ ॥ ३

नकुलमहिषकङ्कगृध्राखुनेत्रैकपिङ्गेक्षणाः काकनेत्राहिनेत्राः तथा वानराक्षाः तथा सूकरोलूकमार्जारनेत्रा जडा मिश्रकेशाश्च सीमन्तकेशा हया गूढशार्दूलराजीयुतोऽश्वोऽवगण्डः खरासारमार्जारपादा विना वालकेशैश्च जाता तथा प्रोथताल्वोष्ठ-जिह्वाशिरःसृक्वमेढ्राण्डकृष्णा हयाः अन्यवर्णेन शीर्षेण पुच्छेन वा प्रदीप्तपुच्छो ललाटलिप्तः श्वित्री तथा गौरखराभपृष्ठः नपुंसकश्च त्रिसरी च मौसली करोति वाहो हतमात्मपृष्ठगम् ॥ ४

प्रेतोपनीतास्तुरगाश्च ये स्युः
ये दग्धचर्मोपमगन्धिनश्च ।

हया द्विगर्भा बहुभिश्च गर्भैः

एते महान्तः कथितास्तु दोषाः ॥ ५

श‍ृङ्गी त्रिकर्णी द्विखुरस्तनी च

स्याल्लम्बनः पञ्चशफोऽञ्जनी च ।

एते महादोषतमा हयानां

नृपं च राष्ट्रं च विनाशयन्ति ॥ ६

एते सर्वे महादोषा महादोषतमास्तथा ।

नामतः कथिताश्चैव अधुना फलमुच्यते ॥ ७

असितैर्दशनैर्वाजी भर्तुः सर्वार्थनाशनः प्रोक्तः ।

विषमदमनः सुतघ्नः शुक्त्याभैः क्षुत्पिपासकरः ॥ ८

उभाभ्यां दन्तपालिभ्यां यस्यैका अधिका भवेत् ।

तं करालीति जानीयादधरोत्तरसंयुतम् ॥ ९

अधरकराली भर्तुः क्षुद्भयकृच्चोत्तरेषु दशनेषु ।

यस्तु कराली वाजी भर्ता जीवेन्न वै तस्य ॥ १०



ĀVARTA IN UPARANDHRA

*See : Verse No 31, Page No. 28*

विरला विषमा दन्ताः तीक्ष्णाग्रा यस्य वाजिनः ।
कुलश्रेष्ठं निहन्त्याशु स्वामिनं तुरगाधमः ॥ ११

हीनैर्दन्तैर्वाजी मित्रघ्नो दारदूषणः कथितः ।
अधिकदशनः प्रजाघ्नः वृषभदशनश्च वर्जितस्तद्वत् ॥ १२

दंष्ट्रास्त्वथवा दन्ता भज्यन्ते यदि वा पतन्ति वाऽश्वस्य ।
एकद्वित्रिचतुर्भिर्दिनैर्भयं तत्र जानीयात् ॥ १३

एकारतुल्यदशनो वाजी वित्तापहो भर्तुः ।
यत्फलमावर्तानां आवर्ताध्याये तत्फलं प्रोक्तम् ॥ १४

दन्तैर्हयस्य तुल्यैः भग्नैर्न तु शोभनं फलं तत्र ।
एवं लक्षणतन्त्रं मिश्रकमेतत्तु लक्षयेन्मतिमान् ॥ १५

यदि पञ्चसमे मुष्कौ लक्ष्येते न स्फुटौ तुरगस्य ।
न च बडवामधिगच्छति स षण्डवृत्तिः कुलान्तकरः ॥ १६

अथ पञ्चमे तु वर्षे प्रवर्तितेऽश्वस्य गूढवृषणोऽसौ ।
समरगृहे स यस्य शुभावहो नैव राजवाहस्तु ॥ १७

वृषणौ कठिनौ सूनोः प्रजातमुष्कस्य रोमशौ स्याताम् ।
सर्वक्षयकर्तासौ सदन्तजातो दिनेजश्च ॥ १८

विषमा ह्रस्वास्तनवः स्थानेषु संस्थिता विवर्णाश्च ।
ईदृग्विधाश्च दशना अशुभा जातस्य सह दशनैः ॥ १९

दिवाजातो रसक्षीणो न च स्थिरपराक्रमः ।
एतद्भवति विज्ञानं दिवाजातस्य वाजिनः २०

न खरो नाति च पटुः सत्त्वसारविवर्जितः ।
अल्पायुर्न च तेजस्वी सन्ध्ययोरुभयोरपि ॥ २१

तस्मात्सर्वेषु कालेषु रात्रिजातः प्रशस्यते ।
अधिकाङ्गौ हीनाङ्गौ न शुभावेतौ हयाधमौ स्याताम् ॥ २२

एकवृषणात्रिमुष्कौ द्वावेतौ ससुतभर्तृघ्नौ ।
लम्बवृषणस्तु वाजी कपिमुष्को यस्य रोमशौ वृषणौ ॥ २३

ये च स्युश्चित्रफला घ्नन्त्येते स्वामिनं सकुलम् ।
न कुलमहिषाभनेत्रा गृध्रोलूकाखुकाकनेत्राश्च ॥ २४

मार्जारवानराक्षाः सूकरकोकाक्षिणो येऽश्वाः ।
एते सर्वे पापाः सर्वेऽशुभकारिणो हयाः कथिताः ॥ २५

भर्तुश्च कुलान्तकराः क्षीयन्ते चैव सङ्ग्रामे ।
अथ पिङ्गलैकनेत्रो युद्धे मृत्युप्रदो भर्तुः ॥ २६

तस्मान्नगरे समरे स तुरङ्गो न प्रवेश्यस्तु ।
यः स्पर्धते तुरङ्गैरन्यैः स हयस्तु केवलं मूढः ॥ २७

बन्धं वधं न बुध्येत्स जडोऽश्वस्तं संत्यजेद्दूरम् ।
सीमन्ती च जटी मुञ्जकेशाश्च मिश्रकेशाश्च ॥ २८

एते वर्ज्याश्चैषां न नन्दति कदाचन स्वामी ।
शार्दूलाभो वाजी विभाव्यते राजिभिर्विवर्णाभिः ॥ २९

यस्तुसवर्णोऽपि स्यादवगण्डमेनं विजानीयात् ।
एष स्वामिनमाजौ क्षिप्रं हन्यादकार्यसिद्धिः स्यात् ॥ ३०

नगरे राष्ट्रे निवसेद्यस्य विनश्यत्यसौ राजा ।
खरसारः खरवर्णैस्तु मण्डलैर्यो भवेत्तथा हीनैः ॥ ३१

सकुलं भर्तुः खादति सपुत्रपशुबान्धवं वाजी ।
मार्जाराचित्रचरणो भर्तुः कुर्यान्महद्भयं क्लेशम् ॥ ३२

केशैर्बालैश्च विना जाता अनपत्यतां कुर्युः ।
कृष्णप्रोथः क्षपयति स्वामिनमश्वः सबान्धवं ससुतम् ॥ ३३

औष्ठौ यस्य तु कृष्णौ विज्ञेयः सोऽपि भर्तृघ्नः ।
कृष्णेन तालुनाऽश्वः स्वामिनमात्मानमेव विषमे वा ॥ ३४

क्षुत्तृट्दोषैर्युक्तस्त्यजति तमचिरात्स पापात्मा ।
यस्मिन्यस्मिन्वर्णे सकृष्णजिह्वस्तुरङ्गमो भवति ॥ ३५

न भवति स शुभो भर्तुः लक्ष्मीसर्वार्थनाशकरः ।
कृष्णाण्डो वधबन्धौ खड्गाद्युपद्रवं स्वामिनः कुर्यात् ॥ ३६

सृक्किशिरोमेढ्रेषु च ये कृष्णास्तेऽपि भर्तृघ्नाः ।
वर्णेनान्येन हयः शिरसा पुच्छेन चान्यवर्णेन ।
भर्तृघ्नः स तु समरे विवर्जितो भूतिमिच्छाद्भिः ॥ ३७

यस्यैकवर्णस्य हयस्य दृश्यते
पुच्छस्य चाग्रे शितमन्यवर्णम् ।
प्रदीप्तपुच्छस्तुरगः स उच्यते
सुखाद्दतैर्वै परिवर्जनीयः ॥ ३८

अलाबुपुष्पोपमरोमजं हि
गुह्ये मुखे वा नयनेऽथवा स्थितम् ।
श्वित्रं सितं यस्य हयस्य दृश्यते
सस्वामिनं हन्ति सपुत्रबान्धवम् ॥ ३९

गौरी खरस्येव हयस्य यस्य
राजी विवर्णा त्वथ पृष्ठवंशे ।
तं विद्धि गौरीखरपृष्ठवंशं
त्यजेद्विदूरं हयलक्षणज्ञः ॥ ४०

मेढ्रं मृदुनिस्पर्शं यस्य बहिर्गच्छति हयस्य ।
अशुभं नपुंसकं तं विवर्जयेदिन्द्रवृद्धिसमम् ॥ ४१

सर्वश्वेतस्य शिरो यस्य भवेत्कृष्णवर्णमश्वस्य ।
सहयस्त्रिसरीनामा भर्तुः सर्वार्थनाशकरः ॥ ४२

आरोहकं च पृष्ठे वहति हतं तुरङ्गमो योऽसौ ।
प्रेतोपनीतमश्वं विवर्जयेत्सर्वदोषकरम् ॥ ४३

वालाः केशाश्च शिरो यस्य विदग्धचर्मगन्धाः स्युः ।
तस्य तुरगस्य भर्तुः नित्यं ज्वलनप्रियं भवनम् ॥ ४४

वर्ज्या तुरङ्गी ह्यमलप्रसूर्वा दद्याच्छिशुभ्यां सह तां द्विजेभ्यः ।
भवेयुरेवं बहवोऽपि यस्या दूरं त्यजेत्तामपि तैः समेताम् ॥ ४५

ललाटदेशे शिरसि भ्रुवोर्वा कर्णस्य मूलेऽथ समुच्छ्रितं वा ।
रुरोर्विषाणाग्रनिभं बलिर्वा आम्रास्थिवद्गोस्तनसन्निभं वा ॥ ४६

स्याच्चर्मकीली त्वथ चार्बुदं वा शृङ्गं तु हस्ताङ्गुलसन्निभं वा ।
स्याद्यस्य तं शृङ्गिणमश्वमाहुः राज्ञः सदा राष्ट्रविनाशहेतुः ॥ ४७

कर्णाभ्याशे कर्णो यस्यान्यो जायते विकर्णोऽसौ ।
नृपतिं बान्धवसहितं राष्ट्रं कृत्स्नं विनाशयेत्क्षिप्रम् ॥ ४८

गोशफतुल्यो द्विखुरी गोऽग्रखुरोपमस्तथोपखुरी ।
एतावपि भर्तृघ्नौ शृङ्गिसमावेव वाजिनौ स्याताम् ॥ ४९

गोस्तनसन्निभौ द्वौ मूत्रकोशस्य पार्श्वयोर्यस्य ।
अश्वः स्तनी स कथितः कृच्छ्रं राष्ट्रं विनाशयति ॥ ५०

जान्वोः कूर्चाभ्याशे खुराभ्याशे च यस्य पादोऽन्यः ।
सहयः पञ्चशफः स्यात्तस्य फलं शृङ्गिवद्ज्ञेयम् ॥ ५१

अजिनी मृगाजिनाभः पृष्ठस्कन्धांसजघनदेशेषु ।
यस्य तु तुरगस्य भवेदजिनी स तु निन्दितः प्राज्ञैः ॥ ५२

पृष्ठे भर्तृविनाशो भ्रातृवधः स्कन्धदेशे तु ।
अंसे पुत्रविनाशो जघने तु दारनाशनः कथितः ॥ ५३

एते महादोषतमाः सुरौद्रा शृङ्गादयः षट्कथिता मुनीन्द्रैः ।
ते वर्जनीया अशुभाः सदैव नृपं च राष्ट्रं च विनाशयन्ति ॥ ५४

यथा गर्गेण यत्प्रोक्तं तदिह प्रोच्यतेऽधुना ।
न चैषां विद्यते किंचित्प्रतिघाताय कारणम् ॥ ५५

सर्वैरपि गुणैर्युक्ता वर्जनीया हयाधमाः ।
तान्नृपो वाऽथवा चान्ये न स्पृशेयुः कदाचन ॥ ५६

दृष्ट्वा सूर्यं निरीक्षेत स्पृष्ट्वा स्नानं समाचरेत् ।
पूजयेत्तु द्विजश्रेष्ठं दद्याद्दानं तु काञ्चनम् ॥ ५७

तस्मादेतान्नृपो देशात्त्यक्त्वा शान्तिं प्रयोजयेत् ।
देवानां प्रणिपातेन नियमैः शान्तिकर्मभिः ॥ ५८

एवं प्रशाम्यते दोषो द्विजातीनां प्रपूजनात् ।
शृङ्गं कीलार्गलं छित्त्वा पुष्पमावावर्तमेव च ।
सुवर्णेन दहेत्कर्णे हुत्वा संपूजयेद्द्विजान् ॥ ५९

दातुः प्रजारक्षणतत्परस्य
शूरस्य धर्मे निरतस्य नित्यम् ।
होमे जपे यस्य परस्य राज्ञो
दोषाः प्रशाम्यन्ति तुरङ्गमोत्थाः ॥ ६०

अलुब्धः सत्त्ववांश्चैव न दोषैर्लिप्यते नरः ।
यज्वा चैव हुताग्निश्च द्विजो वा वेदपारगः ॥ ६१

॥ इति महादोषाध्यायः ॥

---

## ॥ तालुरङ्गाध्यायः ॥

---

महादोषाः समाख्यातास्तालुरङ्गमतः शृणु ।
गर्भस्थस्य यदा पित्तं कुप्यते तालुके भृशम् ॥ १

कृष्णतालुस्तदा वाहो जायते पापलक्षणः ।
तालुरागोऽपि वाहानां शुभाशुभफलप्रदः ॥ २

श्वेतं पीतं रक्तं श्यामं कृष्णं च चित्रमूर्ध्वसितम् ।
सप्तविधं जानीयात्तालुनि रागं तुरङ्गाणाम् ॥ ३



ĀVARTA IN THROAT

*See : Verse No. 32. Page No. 28*



2 SUKTIS IN KEŚĀNTA

*See : Verse No. 34. Page No. 28*

रक्तनिभः श्रेष्ठतमः शेषा रागाश्च नैव शस्यन्ते ।
किंचिद्विशेषमेषां श्वेतादीनां प्रवक्ष्यामि ॥ ४

निर्वाणाङ्गारनिभं यस्य भवेत्तालु वाजिनस्तस्य ।
भर्तुरचिरेण राज्यं राष्ट्रं विनाशमुपयाति ॥ ५

भर्तुर्वधोऽर्धकृष्णे तालुनि जाते सुतस्य जानीयात् ।
ऊर्म्यन्तरिते कृष्णे पराजयं स्वामिनो विन्द्यात् ॥ ६

कृष्णेनातः क्षिप्तं मध्ये शुद्धं तु तालु यस्य स्यात् ।
परिणद्धतालुरश्वो भर्तुः क्लेशवहो ह्येषः ॥ ७

कृष्णस्तु तालुवंशे पर्यन्तः पद्मपत्रसङ्काशः ।
यस्याश्वस्य स नित्यं पराजयं स्वामिनः कुर्यात् ॥ ८

कृष्णैर्बिन्दुभिरथवा कल्माषैस्तालु चित्रितं यस्य ।
कल्माषतालुरेष स्वामिनमशुभे नियोजयति ॥ ९

दीपाग्निबालदिनकरपद्मदलाभं भवेद्वापि ।
स्निग्धं तनु गंभीरं तालु शुभं वाजिनो ज्ञेयम् ॥ १०

उक्तं च शालिहोत्रेण ।
समानवर्णं वर्णेन तालुकं यस्य दृश्यते ॥ ११

न स तालुकदोषः स्यात् फलमल्पं च वक्ष्यते ।
सवर्णस्त्वथ दोषाय सकलः कृष्णतालुकः ॥ १२

॥ इति तालुरङ्गलक्षणाध्यायः ॥

## ॥ कुललक्षणाध्यायः ॥

तालुरागाः समाख्याताः कुलानां लक्षणं शृणु ।
हयाः [1]काम्बोज[2]बाल्हीक [3]वैनायुजकुलोद्भवाः ॥ १

[4]गान्धारकुलसंभूतास्तथा[5]ऽरट्टकुलोद्भवाः ।
[6]वाहेयाः [7]सैन्धवाश्चैव [8]तैत्तिकाश्चैव वाजिनः ॥ २

[9]कुलजाश्चो[10]पकुलजा [11]मेचका [12]ह्युपमेचकाः ।
[13]कैवर्ता[14]श्चार्जुनीयाश्च [15]पार्वतीयास्तथैव ॥ ३

[16]यौधेया [17]यावनाश्चैव येचान्ये [18]ह्रस्वयावनाः ।
[19]तुषाराः [20]कादरेयाश्च [21]पार्वतीयास्तथैव च ॥ ४

[22]आवन्त्याश्चापि [23]काश्मीरा हया ये च [24]सकाननाः ।
[25]पार्वत्यो[26]त्तर[27]माद्रेयाः [28]दाक्षिणेयाः प्रकीर्तिताः ॥ ५

[29] अन्तर्द्वीपोद्भवा वाहा [30] कैकेयाम्बष्ठ [31] संज्ञकाः ।
[32] वासन्तिकाश्च [33] सौवीरा [34] दारदा [35] सैरिकास्तथा ॥ ६

[36] कैराता क्षुद्रकैराता [37] [38] मालवा [39] विन्ध्यकास्तथा ।
[40] कालिङ्गा [41] माधुराश्चैव [42] मानवाश्वास्तथैव च ॥ ७

[43] कौशल्याश्चा[44]र्जुनेयाश्च [45] तथोपावृत्तिका हयाः ।
[46] सौराष्ट्राश्चैव [47] सौवीराः [48] कौरवेयास्तथैव च ॥ ८

[49] पाञ्चालाः [50] पौण्ड्रकाश्चैव [51] कुक्कुटा [52] ह्रस्वकुक्कुटाः ।
तथा [53] हैमवता ये च ये चोक्ता [54] मगधोद्भवाः ॥ ९

चतुः पञ्चाशदश्वानां कुलान्येतानि लक्षयेत् ।
कुलानि नव चान्यानि घोटकानां विभावयेत् ॥ १०

अतस्ते संज्ञया योज्या न तु घोटगुणान्विताः ।
[1]म[2]त्ता[3]विका[4]श्या[5]श्मकेया मा[6]लिकाः श्वेतवाहनाः ।
[7] मेचका [8] श्वेतगिरिजा [9] वैदर्भा घोटकाः स्मृताः ॥ ११

पूर्वदक्षिणभागेन हिमवन्तं समाश्रिताः ।
घोटकास्तेऽपि विज्ञेयाः श्यामे वा घोटकाः स्मताः ॥ १२

अतः परं व्यञ्जनैस्तु प्रत्येकं संप्रवक्ष्यते ।
यथोद्दिष्टाः कुलगणाः शृणु तांश्च पृथक्पृथक् ॥ १३

१. कांभोजाः —

कांभोजाः सुमहाल्ललाटजघनस्कन्धा महावक्षसो
दीर्घग्रीवमुखा महाजवयुता ह्रस्वाण्डमेढ्रासनाः ।
श्रीमन्तः सुमहासमुद्ध्रचरणा दीर्घैस्तु जातैर्भुजैः
सर्वव्यञ्जनपूजिता दृढशफा मण्डूकनेत्राश्च ये ॥ १४

श्वेताश्च शोणाश्च भवन्त्यदीना
न कृष्णवर्णा न विवर्णितास्ते ।
ह्रस्वैश्च कूर्चैर्मृदुरोमकेशाः
ह्रस्वेन पृष्ठेन सुवर्णवन्तः ॥ १५

सुसंहिताङ्गाः प्रियदर्शनास्ते
नित्यं च भर्तुर्वशगा मनोज्ञाः ।
तेजस्विनः सारयुताः सुशीलाः
श्रेयः स्वरूपेण कुलेन दृप्ताः ॥ १६

समवृत्तजानुजङ्घा
वृत्ताङ्गा ह्रस्वकुष्ठिकखुराश्च ।
पीनास्तनुलाङ्गूलाः
स्थूलाक्षाः शङ्कुकर्णाश्च ॥ १७

सुमहासृक्वप्रोथा
महोदरास्ते महातनुश्वासाः ।
प्रत्यक्षं बडबामपि
दृष्ट्वा न ये प्रहेषन्ते ॥  १८

ऊर्ध्वमुखाः स्थिरपादा
शुभरोमाणः सुपार्श्वाश्च ।
शूराः सुखसंचाराः
काम्भोजास्ते समाख्याताः ॥  १९

२. बाह्लीकाः —

बाह्लीकाः काम्भोजैः
समानसंस्थानवर्णरूपाश्च ।
तेषामयं विशेषो
दीर्घोदरपृष्ठवंशास्ते ॥  २०

परिणाहायामाभ्या
मधिकाः किंश्चिन्महेक्षणाः शूराः ।
हत्पृष्ठमूर्तिदीर्घा
दीर्घग्रीवा दशनकेशाश्च ॥  २१

मधुपिङ्गलाभनयना
क्रुद्धास्ते दन्तखादिनः कथिताः ।
भर्तुश्च वत्सलाः स्यु
र्महाजवा रूपसौन्दर्यसंपन्नाः ॥ २२

३. वनायुजाः —

वनायुजाश्च लघवः प्रचण्ड
मध्यप्रमाणाश्चपला न दीनाः ।
वृत्तायताः कायसमाः सुनेत्राः
ह्रस्वाण्डमेढ्रास्त्वथ शङ्कुकर्णाः ॥ २३

पूर्वार्धकायेषु समुच्छ्रितास्ते
ह्रस्वास्त्रिके भारसहाः सुसत्वाः ।
स्थूलैश्च पादैर्दृढकुष्ठिकाश्च
कालानुवर्णा बहुशो भवन्ति ॥ २४

अपाङ्गदेशे विकटाः सुदीर्घा
मेघेभनादेषु न शङ्किनस्ते ।
क्षान्ता मृगेन्द्रा इव ते विभान्ति
दर्पोज्ज्वला वह्निसमानरूपाः ॥ २५

रथे योक्तुं न शक्यन्ते न सहन्ते च यन्त्रणाम् ।
स्नायुसंयुतगात्राश्च सर्वेभ्योऽप्यधिका जवात् ॥ २६

वन्यपर्वतदुर्गाणां मध्ये नेच्छन्ति धावितुम् ।
मयूरसदृशग्रीवाः सुवर्णसदृशाश्च ये ॥ २७

४. गान्धाराः —

गान्धारा बहुवर्णाः
शरीरवन्तः सुसंस्थिता बलिनः ।
दृसोदयाश्च पुरतः
पश्चाद्विषमाश्च दीर्घाश्च ॥ २८

५. आरट्टजाः —

आरट्टजाः सुजघना
अदीर्घपृष्ठाः सुकुष्ठिका बलिनः ।
स्थूलाक्षिकूटशङ्खा
स्तेजोजवसारयुक्ताः स्युः ॥ २९

६. सैन्धवाः —

सैन्धवकुलजा बलिनो
दृढजत्रुमहोरसो महाप्रोथाः ।

तनुसृक्ववत्त्वग्गोला
विलम्बमुष्काः सुमेढ्राश्च ॥ ३०

७. तैत्तिजाः —

दीर्घग्रीवामुखाः स्युः
स्थूलाक्षास्ते महाकायाः ।
तैत्तिजकुलजा जविनः
स्थूलहनुग्रीवमेढ्रमुष्काः स्युः ॥ ३१

८. कुलजाः —

पृथुवक्षोजघनाक्षा
भाराध्वसहाः सुगात्राश्च ।
कुलजा वृत्तग्रीवा
आयतवक्त्राश्च दीर्घवालाश्च ॥ ३२

९. उपकुलजाः —

तनुरोमत्वक्केशाः
सुवृत्तमध्योरुकुष्ठिका ख्याताः ।
उपकुलजाः कुलजानां
समलिङ्गाः किञ्चिदायतशरीराः ॥ ३३

१०. मेचकाः —

अल्पगतयोऽल्पसत्त्वा
भारसहाः कर्बुराश्चैते ।
मेचककुलजा वाहा
दीर्घग्रीवा महोरसस्तुङ्गाः ॥ ३४

स्पष्टमुखवल्गुवर्णा
मध्यबलाः शङ्कुकर्णाश्च ।
तनुभिर्गात्रैर्ह्रस्वैः
कूर्चैश्च खुरैश्च विपुलजघनाः स्युः ॥ ३५

११. उपमेचकाः —

विस्तीर्णकाकसाः स्यु-
र्न कर्कशा मध्यमेढ्रास्ते ।
उपमेचकाः स्युरुच्चै-
र्बद्धशिरोग्रीवदुर्धरैः केशैः ॥ ३६

१२. त्रैगर्ताः —

मृद्वङ्गा वल्गुसटाः
सुकुष्टिका दुर्मुखास्तुरगाः ।

त्रैगर्ताः शशिवदनाः
शशिबालाधिकेसराः शशिप्रोथाः ॥ ३७

१३. गौधेयाः —

दृढपादा अक्रूरा
शशिवर्णाः प्रायशस्तेऽश्वाः ।
यौधेया भारसहा
सुखुरा वृत्तायतघनग्रीवाः ॥ ३८

१४. सावित्रेयाः —

स्पष्टायतवदनाः स्यु-
श्चण्डास्तनुसूक्ष्मरोमाणः ।
सावित्रेयास्तुरगा
घासग्रासान्विताः शूराः ॥ ३९

मृद्वङ्गाः पृथुपादा
महोदराः सुप्रसन्नाश्च ।
शस्तोरुपृष्ठदीर्घा
स्थिरमांसा दीर्घकेशवालाश्च ॥ ४०

१५. यवनाः —

चारुनयनकपोला-
स्तनुहनुवक्रास्तुरङ्गमाः शस्ताः ।
यवनास्तुरगा विपुलाः
पृथुघनवक्षोललाटनयनाः स्युः ॥ ४१

दीर्घाः सुकुष्ठिकाः
सुखुरा लघुक्रमाः शस्ताः ।
प्रियदर्शनाः सुवर्णाः
स्पष्टायततनुमहाकायाः ।
तेजःसत्त्वोपेताः
तनुत्वचश्चापि सूक्ष्मरोमाणः ॥ ४२

१६. तर्जिताः —

द्वीपे समुद्रस्य चरन्ति वाहाः
सन्तर्जिता ये मधुना तु पूर्वम् ।
तीर्त्वा समुद्रं यवने तु देशे
तुरङ्गमाणां जंनयन्ति पुत्रान् ॥ ४३

तेजस्विनस्तर्जितसंज्ञिकाश्च
तत्तुल्यरूपाः सुमहाजवाः स्युः ।
ज्ञेयाः प्रकृत्या निजया सपित्ता-
स्तेभ्योऽपि जातास्तुरगाः सुरूपाः ॥ ४४

१७. अर्जुनाश्वाः —

ते स्युश्चार्जुनजा वाहाः
पृथूदराः प्रलम्बमुष्काश्च ।
शुचिसमवक्रस्कन्ध-
ग्रीवाश्च ह्रस्वपृष्ठाः स्युः ॥ ४५

१८. ह्रस्वयावनाः —

त एव ह्रस्वा यवन
संज्ञास्त्वन्ये हयाः प्रोक्ताः ।
ह्रस्वाङ्गाः शुभगात्राः
शुभसाराः शुभजवाश्चापि ।
शुभरोमवालकेशाः
सुभगाः सुमेढ्रकाः सुरूपाश्च ॥ ४६

१९. तुषाराः —

प्रियदर्शना मनोज्ञा-
स्तेजोजवसत्त्वसंयुक्ताः ।
एवं तुषारकाश्वा
जवसत्त्वबलान्विता महाकायाः ॥ ४७

भाराध्वक्लेशसहाः
स्वेच्छाचाराः पृथूदरोरस्काः ।
दृढमेधसः सुशीला
बलवन्तस्ते मनस्विनश्चित्राः ॥ ४८

२०. कादरेयाः —

पृथुजघनदृढपादा
सुकुष्ठिकाः शुभखुरास्तुरङ्गाः ।
अश्वास्तु कादरेया-
दृढपादाः सूक्ष्मवालरोमाणः ॥ ४९

२१. पार्वतीयाः —

स्थूलत्वचः सुशीलाः
सुकुष्ठिकाः कायवर्तुलाश्चैव ।

अश्वास्तु पार्वतीयाः
पूर्वशरीरेषु संस्थितास्ते स्युः ॥ ५०

२२. आवन्त्याः —

पश्चार्धेषु च विषमाः
तनूदराः ह्रस्वपृष्ठाश्च ।
आवन्त्याः स्थूलाङ्गाः
पृथुवक्षोजघनसूक्ष्मरोमाणः ॥ ५१

२३. काश्मीराः —

औरस्याः पृथुजङ्घा
दृढपादा महोदरोरस्काः ।
काश्मीराः शुद्धाक्षा
विपुलसटाः सुसंहताः सुखुराः ॥ ५२

२४. काननाः —

स्पष्टायततनुवक्त्रा-
स्तुरगास्तु शङ्कुकर्णास्ते ।
अश्वास्तु कानना वै
शुभाननास्ते पुनः समुद्दिष्टाः ॥ ५३

पूर्वार्धे स्युरुदग्राः
पश्चार्धे चोद्यता जविनः ।
हेषन्ते प्रत्यक्षं
दृष्ट्वा बडबां च शङ्कुकर्णास्ते ॥ ५४

२५. उष्ट्राः —

मृदुदीर्घा उद्ग्रीवा
उष्ट्राख्या उष्ट्रगात्रवक्त्राः स्युः ॥ ५५

२६. पार्वतीयाः —

वाहास्तु पार्वतीया
बलान्विताः स्निग्धकेशाश्च ।
वृत्तास्ते दृढपादा
महाजवाश्चेति विख्याताः ॥ ५६

आजानेयास्त्वेवं
कथितानि कुलानि वै पृथक्त्वेन ।
षड्विंशतिरश्वानां
च विशेषं वक्ष्यते त्वधुना ॥ ५७

आजानेयास्तुरङ्गा दृढचरणयुता वर्ष्मवन्तः सुनेत्रा
भूयिष्ठं वर्णयुक्ताः प्रकृतिगतिगुणैरर्चिता ह्रस्वमुष्काः ।
सङ्ग्रामे भर्तृवश्याः प्रबलजवयुताः शुद्धसत्त्वाः सुशीला
आयुष्मन्तोऽल्परोगा मृदुतनुसुमहादीर्घनिर्मांसवक्त्राः ॥ ५८

सुविभक्तोपचिताङ्गाः
सुसंहता ह्रस्वपृष्ठखुरकर्णाः ।
बलतेजःसारयुता
जितेन्द्रियाः क्षुत्पिपासभारसहाः ॥ ५९

शुभकायाः शुभरूपाः
शुभगन्धाः शुभस्वराः शुभस्थास्ते ।
शुभलक्षणाश्च सुभगा
न कर्कशास्ते जितक्रोधाः ॥ ६०

निशितास्त्रभिन्नकायाः
संज्ञां न जानन्ति विह्वलास्तस्मात् ।
आजानेया वाहा-
स्तस्मादेते समुद्दिष्टाः ॥ ६१



SARVAMĀNADA

*See : Verse No. 38, Page No. 28*

एते विभिन्नदेहा

विनिर्गतान्त्रा गताश्च मृत्युवशम् ।

यावत्पृष्ठे भर्ता

तावत्प्राणान्न मुञ्चन्ति ॥ ६२

विस्तरभयान्न चोक्तम्

कुलजानां लक्षणं हि शेषाणाम् ॥ ६३

उक्तं च शालिहोत्रेण —

तत्र काम्भोजानामुपकुलं वनायुजमारट्टजं बाह्लीकाश्च ।

वनायुजानामुपकुलं गान्धाराः ॥ ६४

आरट्टाजानां वाहेयाः ।

सैन्धवानां तैत्तिराः ॥

॥ इति कुलोपकुलजलक्षणम् ॥

---

## ॥ अथ वयोज्ञानम् ॥

कुलानां लक्षणं प्रोक्तं वयसो ज्ञानमुच्यते ।
वयो ज्ञानविदो लोके यस्मात्सर्वजनप्रियाः ॥ १

वयसो ज्ञानं द्विविधं
बाह्यं चाभ्यन्तरं समुद्दिष्टम् ।
बाह्यं बहिः शरीरज
माभ्यन्तरमपि देहदशनस्थम् ॥ २

प्रथमवयोनिःश्रेणी —

प्रथमे च मासि शावः
सन्दंशैः किञ्चिदुद्गतैर्ज्ञेयः ।
व्यक्तैश्च तैर्द्विमासः
षट्पक्षो मध्यमैर्जातैः ॥ ३

पूर्णैर्मध्यमदशनैः
सन्दंशैश्चैव पञ्चमे मासि ।
लक्ष्यालक्ष्या सुसूक्ष्मा
राजी धूम्रारुणा तु सन्दंशैः ॥ ४

स्यात्पूर्णाग्रैर्दन्तैः
　　स तु चाल्पषाण्मासिको वाजी ।
प्रोद्भिन्नैरनुभूतै-
　　र्विज्ञेयः साप्तमासिको विज्ञैः ॥ ५

सन्दंशाभ्यां तुरगः
　　शुक्लाभ्यामष्टमासिको ज्ञेयः ।
ज्ञेयश्च शिशुर्नवमे
　　संपूर्णैः पारिभक्षैश्च ॥ ६

द्वितीयादिपञ्चमान्तवयोनिःश्रेणी —

सितदशनः प्रथमेऽब्दे
　　कषायदशनश्च भवेद्द्वितीये तु ।
पतितोत्थितैश्च दशनै-
　　स्त्रिहायनः कीर्तितस्तुरगः ॥ ७

मध्यमदशनैः पतितै-
　　रुद्भूतैः स्याच्चतुःसमो वाजी ।
पञ्चाधिकस्तु कथित-
　　श्च्युतोत्थितैः पारिभक्षैश्च ॥ ८

तस्मिन् काले वाजी
पतितोत्थितदन्तचक्रको बलवान् ।
स्निग्धाज्यवर्णदशनै-
र्दृश्यः सर्वाङ्गसंपूर्णः ॥ ९

पूर्णफलो दंष्ट्रावान्
प्रसन्नमुदितेन्द्रियः सुरोमा च ।
पञ्चसमो भवति हय-
स्तेजस्वी सर्वकर्मसहः ॥ १०

ह्रस्वास्तनवश्च समाः
पृथ्वग्राः क्षीरसन्निभाश्चैव ।
सरलाः सुसंज्ञिता वै
दन्ताः कैशोरका ज्ञेयाः ॥ ११

श्वेताश्च दीर्घाश्च सुसंहताश्च
तीक्ष्णाग्रसंस्था विपुला दृढाश्च ।
मध्ये विभक्तास्त्वथ मूर्ध्नि निम्ना-
श्च्युतोत्थितास्ते दशनाः प्रदिष्टाः ॥ १२

व्यञ्जनलक्षणम् —

प्रथमेऽब्दे सन्दंशे
द्वित्रिसमे मध्यमान्तेषु ।
व्यञ्जनमश्वेषु भवेत्
षष्ठादारभ्य दशनेषु ॥ १३

कृष्णा हरिणी शुक्ला
सिता काचा च मक्षिका चैव ।
शङ्खच्छिद्रं चलनं
व्यञ्जनमेतत्क्रमेण विज्ञेयम् ॥ १४

अवृद्धा वृद्धरूपाश्च वृद्धास्तरुणसंस्थिताः ।
दृश्यन्ते वाजिनः केचित्सम्मोहनकरा भृशम् ॥ १५

वयः परीक्षेत्खुररोमदन्त
चेष्टाबलौजोवचनादियोगैः ।
संस्थानविण्मूत्रसमर्थनाभि-
रश्वस्य तज्ज्ञैरपरैश्च लिङ्गैः ॥ १६

रेखाऽऽयता तिर्यगरिष्टवर्णा
कृष्णा भवेत्षट्पदसंनिभा वा ।

तन्वीसवर्णा हरिणी प्रदिष्टा
शुक्ला दधिक्षीरसमानवर्णा ॥ १७

सिता सिद्धार्थकवर्णा
काचा किञ्चित्तु कोद्रवसवर्णा ।
या मक्षिकासवर्णा
ज्ञेया सा मक्षिका निपुणैः ॥ १८

शङ्खं शङ्खदलोपमा-
मुलूखलं दन्तमध्यजच्छिद्रम् ।
विन्द्याच्चलितैश्चलनं
दन्तैः पतनं तु पतितैश्च ॥ १९

एवं कृष्णा हरिणी
शुक्ला काचा च मक्षिका चैव ।
शङ्खोलूखलचलनं
भ्रंशाश्चैषां क्रमः कथितः ॥ २०

षष्ठादिद्वात्रिंशान्तवयोनिःश्रेणी —

षष्ठेऽब्दे सन्दंशे
मध्यमदशनेषु षड्गवे वर्षे ।

कृष्णाऽष्टमे तु वर्षे
विज्ञेया पारिभक्षेषु ॥ २१

हारिणी नवमे दशमे
वर्षे चैकादशे तु दशनेषु ।
सन्दंशमध्यमान्त्ये
वाजिनमालक्षयेन्मतिमान् ॥ २२

एवं सिता द्वादशके तु वर्षे
त्रयोदशे चैव चतुर्दशे च ।
सन्दंशमध्यान्त्यमुखोद्भवेषु
समुत्थितां विद्धि तुरङ्गमस्य ॥ २३

काचा पञ्चदशे वै
षोडशके तदुत्तरे च वाहानाम् ।
अग्रिममध्यम-
दशनेष्वथ पारिपक्षेषु चादेश्या ॥ २४

अष्टादशके चैकोन-
विंशतिसंज्ञिके च विंशतिमे ।
सन्दंशमध्यान्त्ये-
ष्वथ वाजिनां माक्षिका कथिता ॥ २५

एवं क्रमेण शंखं
छिद्रं चलनं पतनं तदेषु ।
त्रीणि त्रीण्यब्दानि तु
वाहानां निर्दिशेत्प्राज्ञः ॥ २६

व्यञ्जनक्रमेण संस्थानलक्षणम् —

हृष्टः संपूर्णमांसः समुदितगजवन्मेघनादः क्षमावां
स्तेजस्वी सत्त्वयुक्तः परमबलजवः सर्वसंपूर्णकायः ।
क्षुत्तृड्भाराध्वशीतातपपवनसहः सुप्रसन्नेन्द्रियात्मा
चैभिर्लिङ्गैरुपेतो भवति गतवयाः कालिकाव्यञ्जनोऽश्वः ॥ २७

स्थिरमांसस्तेजस्वी
बलवान् क्षुत्तृट्सहः सततम् ।
रूपयुतो घननादः
स तु हरिणी व्यञ्जनो वाजी ॥ २८

बलजवतेजोरूपैः
प्रहीयमानोऽनुमस्तके वलिभिः ।
वाहं ललाटपलितं
तं शुक्लाख्ये व्यञ्जने विन्द्यात् ॥ २९



BAD SITUATION FOR ĀVARTAS
AT SANKHA

*See : Verse No. 45, Page No. 29*

मांसवपुर्जवहीनः
सस्नायुः स्थूलजानुकः क्लीबः ।
दुर्वर्णदीर्घदशनः
स्यात्काचाव्यञ्जनो वाजी ॥ ३०

पलितवलीकर्णाङ्गो
विशीर्णदन्तश्च गतबलोत्साहः ।
दुःखी कुञ्चितनेत्रो
भवति च मक्षिकाव्यञ्जनो वाजी ॥ ३१

गंभीराक्षो दीनः
स्याच्छङ्खव्यञ्जनो विगतमांसः ।
हर्षक्रोधविमुक्तः
समुद्गतोलूखलो वाहः ॥ ३२

मन्दं यवसं खादन्
स्याच्चलितवक्त्रजो वाजी ।
दन्तैः पतितैर्वाजी
आयुर्द्वात्रिंशकः कथितः ॥ ३३

गर्गेणोक्तं तु गजे
यथा शतं विंशतिश्च पुंसि शतम् ।
परमायुः कथितमिदं
तद्वद्द्वात्रिंशदश्वेषु ॥ ३४

चरतो मन्दुराश्वस्य लवसारसमाश्रयात् ।
क्षयवृद्धिगतीर्ज्ञात्वा ततो व्यञ्जनमादिशेत् ॥ ३५

प्लवादिविशेषलक्षणम् —

च्युतोत्थिता द्विजा ये तु भान्ति कैशोरका इव ।
ते प्लवाः येष्वथोद्भूतं व्यञ्जनं लघु दृश्यते ॥ ३६

सारदन्ताः स्थिता श्वेताः घनास्तीक्ष्णास्तु संस्थिताः ।
क्रमात्तेषु क्षयं याति व्यञ्जनं परिसंस्थितम् ॥ ३७

यान्येव सारदन्तस्य चरतो मन्दुराश्रये ।
त्रीणि वर्षाणि चाप्येवं दंशेष्वेषु विनिर्दिशेत् ॥ ३८

एवमेव तु "चारक्याः" सारदन्ताः प्रकीर्तिताः ।
चारक्यदन्तो विज्ञेयश्चतुर्थे कालिकोद्भवः ।
सप्तमे हारिणी तस्य सन्दंशाश्रयणी भवेत् ॥ ३९

आयुःसिद्धान्तः —

उक्तं च शालिहोत्रेण ।
यथा नरे वर्षशतं विंशतिश्च शतं गजे ।
गवां चतुर्विंशतिश्च खरोष्ट्रौ पञ्चविंशतिः ॥ ४०

शुनि षोडशवर्षाणि सृगाले पञ्चविंशतिः ।
कृमयः सप्त चाहानि मक्षिका च चतुर्दश ।
तथा हयेषु द्वात्रिंशत्समा आयुर्विधीयते ॥ ४१

॥ इति वयोज्ञानम् ॥

---

## ॥ अथ वर्णलक्षणम् ॥

---

कथितं तु वयोज्ञानं वर्णानां लक्षणं शृणु ॥ १

श्वेतः शोणः कृष्णः
हरितो वर्णा भवन्ति चत्वारः ।
चित्रस्तथा पञ्चमक-
स्त्वेते वर्णप्रकाराः पञ्चैव ॥ २

वर्णपरिज्ञानम् —

ज्ञेयः समानवर्ण-
स्त्वेककेसररोमवालैश्च ॥ ३

हीरक्षीरशशाङ्कशङ्खरजतप्रालेयवर्णाः सिता
आर्द्रालक्तकदाडिमीकुसुमवद्रक्ताश्च शोणाः स्मृताः ।
कृष्णास्त्वञ्जनकोकिलाम्बुदनिभा भृङ्गाङ्गनागोपमा
हेमाभा हरयः प्रदीप्तहुतभुग्गोरोचनासन्निभाः ॥ ४

एते शुद्धा वर्णा अनुवर्णाश्चैव वर्णभेदाश्च ।
चित्रासाराश्चैषां संयोगेनोपजायन्ते ॥ ५

अनुवर्णपरिज्ञानम् —

तत्र त्वेको वर्णः पूर्वं पश्चाद्भवेत्परो यस्य ।
अनुवर्णं तं विन्द्याद्भेदं सर्वैर्विमिश्रितं वर्णैः ॥ ६

सारोऽश्वः —

एकद्वित्रिसवर्णैर्विचित्रितो भिन्दुभिः सचित्रस्तु ।
श्वेतोऽन्यवर्णमण्डलयुक्तः "सारः" स तु समाख्यातः ॥ ७

कर्कोऽश्वः —

त्वङ्नेत्रवर्ष्ममेहनमेढ्राश्रयमुष्कखुरगुदप्रोथैः ।
पद्मोपमैस्तु कर्कः सितकेसरतनुजवालैश्च ॥ ८

ताम्रस्य तालुमुष्कौ मधूककुसुमप्रभौ तथा कर्कः ।
ताम्रत्वक्शुद्धाक्षस्त्वन्ये केचिद्वदन्त्येवम् ॥ ९

कुक्कुटोऽश्वः —

कर्कस्य यस्य जठरासननासाक्षिवक्त्रदशनाश्च ।
निचिताः कृष्णैर्विंदुभिरथवा रक्तैः स कुक्कुटः प्रोक्तः ॥ १०

क्रौञ्चपत्रोऽश्वः —

सितरोमवालकेशः कृष्णत्वग्गुह्यलोचनौष्ठखुरः ।
एष तु मुनिभिर्वाहो निर्दिष्टः क्रौञ्चपत्रश्च ॥ ११

सिन्धुवारकोऽश्वः —

त्वग्रोमवालकेसरगुह्याक्षिखुरैश्च सिन्धुवारानिभैः ।
योऽश्वः स सिन्धुवारकनामा मुनिभिः समुद्दिष्टः ॥ १२

सिह्मोऽश्वः —

ताम्रा त्वक् संरक्तौ मुष्कौ वदनं च सिह्मरोमा यः ।
वालैः केशैश्च सितैः सिह्मः स हयः समाख्यातः ॥ १३

वृषगौरोऽश्वः —

रक्तोत्पलपीतयुक्तस्ताम्रत्वक्चैव संस्थितो गौरः ।
शुक्लोऽपि कृष्णयुक्तः स तु वृषगौरः समुद्दिष्टः ॥ १४

मुञ्जकेशोऽश्वः —

यस्यान्यवर्णस्य हि शुक्लवर्णाः
केशा भवन्तीह स मुञ्जकेशः ।

अञ्जनकेशकोऽश्वः —

यस्यान्यवर्णस्य तु कृष्णवर्णाः
केशाः स वै अञ्जनकेशकोऽश्वः ॥ १५

मिश्रकेशकोऽश्वः —

यो बहुवर्णैः केशै-
र्युक्तः स मिश्रकेशकः कथितः ।

बहुविधवर्णैर्बालैः
स प्रोक्तो मिश्रवालकश्चैव ॥ १६

शोणोऽश्वः —

कृष्णाक्षिगुह्यकेसर
त्वग्वालखुरास्तुरङ्गमाः शोणाः ।

शोणानुवर्ण्यश्वः —

शोणानुवर्णिनो वा
विज्ञेयाः कालवालैस्तु ॥ १७

शुक्लरोमकोऽश्वः —

रक्तोऽल्पकृष्णरोमा
रक्तखुरो रक्तवालस्तु ।
कृष्णनयनस्तु वाजी
सोऽप्युक्तः शुक्लरोमकः प्राज्ञैः ॥ १७

कालरोमकोऽश्वः —

कृष्णाधिकस्त्वगादौ
ससंज्ञितः कालरोमको निपुणैः ।

मृदुरोमकोऽश्वः —

सितरक्तासितचर्मा

सोऽश्वो मृदुरोमकः कथितः ॥ १८

कालाक्षिकोऽश्वः —

ते चापि बहुलकृष्णाः

कालाक्षिकसंज्ञिताः स्मृता वाहाः ।

श्वेताक्षिकोऽश्वः —

बहुशुक्लाः श्वेताक्षिक

नामानो वाजिनः कथिताः ॥ १९

पाटलोऽश्वः —

सितरक्तासिततनुजै-

र्यः कृष्णो वालकेशखुरनयनैः ।

कृष्णत्वक्चैव भवेत्

स ऋष्यकः पाटलो नाम ॥ २०

कृष्णत्वक्सितरक्तै-

स्तनूरुहैः पाटलो हयः प्रोक्तः ।



BAD SITUATION FOR ĀVARTAS. UPPER

*See : Verse No. 46, Page No 29*

सुमनःपाटलोऽश्वः —

शुक्लैः स एव बहुभिः

स्यात्सुमनःपाटलो वाजी ॥ २१

रक्तपाटलोऽश्वः —

बहुभिः शोणैस्तनुजै-

रल्पसितै रक्तपाटलो वाजी ।

चक्रवाकोऽश्वः —

पीतैर्वालैर्वाजी

सोऽप्युक्तश्चक्रवाकसंज्ञश्च ॥ २२

सिद्धार्थकोऽश्वः —

तनुजैर्गौरैः पीतै-

र्वाहः सिद्धार्थकः प्रोक्तः ।

कपिलोऽश्वः—

रक्तैः पीतैरेतै-

र्युक्तः कपिलो भवेद्यस्तु ॥ २३

धूम्रवर्णोऽश्वः—

असिताल्पयुतः शोणस्तु

धूम्रवर्ण इति कथ्यते वाजी ।

खञ्जरीट्यश्वः —

श्वेतैः पीतैरसितै-
वालत्वङ्ग्मिश्रकेसरो यस्तु ।
ज्ञेयः स खञ्जरीटी
पीतश्वेतोत्तरो वाहः ॥ २४

करण्टकोऽश्वः —

सितरक्तपीतरोमा
रक्तत्वग्यः करण्टकः सोऽश्वः ।

कर्बुरोऽश्वः —

हंसग्रीवसवर्णो
रिक्तत्वक् कर्बुरो ज्ञेयः ॥ २५

श्वेताश्वस्य वैशिष्ट्यम् —

सर्वैर्वर्णैः शस्ता-
स्तुरगाः सप्रभाः स्थिराः स्निग्धाः ।
तेषां श्वेतः श्रेष्ठो
यतो ध्रुवश्चाव्ययश्चासौ ॥ २६

सर्वेषां वर्णानां
संयोगः श्वेतसंयुतः शस्तः ।
यस्मात्कृतेऽपि शुक्ल-
स्तस्माच्छ्वेतः प्रधानतरः ॥ २७

किं बहुना येनोक्ता-
स्तत्र हयास्तु वर्णनामभिः केचित् ।
द्रव्यस्य यस्य सदृशा-
स्तन्नामानस्तुरङ्गमा ज्ञेयाः ॥ २८

देववाहानां वर्णविशेषाः —

सर्वश्वेताः शशिनो
हरयः कनकप्रभाः सुरेन्द्रस्य ।
कृष्णा यमस्य वाहाः
कर्काः शुभलक्षणा विष्णोः ॥ २९

शुकपत्रनिभा भानोः
किंशुकवर्णा हया हुताशस्य ।

असिताभ्रनिभा वरुणस्य

कुबेरस्य तु कुमुदनिभास्तुरङ्गमाः ॥ ३०

एभिर्वर्णैरश्वाः

शुभस्वरावर्तकायरूपाश्च ।

एतेषां देवानां

पृथक्पृथग्वाहनानि कथितानि ॥ ३१

॥ इति वर्णाध्यायः ॥

---

## ॥ अथ राजवाह्याध्यायः ॥

---

देवोपवाह्यं कथितं राज्ञोऽश्वं चाप्यतः परम् ।

परमाश्वं चाभिषेच्यं पुरोधाश्वं तथैव च ॥ १

अमात्यसेनापत्योश्च युवराजस्य वाहनम् ।

वाजिनं संप्रवक्ष्यामि मुनिप्रोक्तं पृथक्पृथक् ॥ २

देवाश्वः —

यः पद्मकिञ्जल्कसमानवर्णः

कङ्गूफलाभः शुकपत्रवर्णः ।

रक्तोत्पलाभः शिखिकण्ठनीलो

वैडूर्यवर्णे नयने च यस्य ॥ ३

रक्ताश्च पीताश्च सिता भवन्ति

यस्यान्यवर्णस्य हयस्य पादाः ।

रक्तः सुजिह्वोन्नततालुजङ्घः

सुलक्षणः श्रेष्ठशुचिः सुधीरः ॥ ४

श्रुत्वा स्वनं यस्य भयेन दीना-

स्तिष्ठन्ति दुःखेन मुहुस्तुरङ्गाः ।

मूत्रं पुरीषं च समुत्सृजन्ति

श्रीमान् स देवाश्व इति प्रसिद्धः ॥ ५

पुरोधोऽश्वः —

कृष्णाम्बुदाभः शितिमण्डलैश्च

यो भूषितः श्वेतशफः सिताक्षः ।

शूरः शुचिः सिह्मगजेन्द्रनादः
स्यादेष मेघोपम एव वाहः ॥ ६

कर्कः पद्मनिभास्यः
शुभगन्धः सर्वगतिर्निपुणः ।
क्षान्तः स खलु पुरोग्रोऽश्वः
शुभसत्त्वावर्तसंपन्नः ॥ ७

राजाश्वः —

श्वेतं कृष्णं रक्तं
हरिमथवा तप्तकाञ्चनप्रख्यम् ।
अनुवर्णं भेदं वा
चित्रं वा सारसाभं वा ॥ ८

एभ्यः क्रमादन्यमपि प्रसिद्धं
मेधाविनं चाल्पपुरीषमूत्रम् ।
शुभोष्ठसत्त्वाननतालुदन्तं
भद्रं महावेगमरोगकं वा ॥ ९

छायापवित्रं सुगतिं शुभद्युतिं
महाबलं स्निग्धतनूरुहेक्षणम् ।

श्रीमन्तमत्रासितमग्र्यवालं
नृणां मनोज्ञं बलपुष्टिवर्धनम् ॥ १०

शुभलक्षणं मनोज्ञं
शुभपुण्ड्रं शुभगतिं शुभावर्तम् ।
आयुष्मन्तं क्षान्तं
सुविभक्ताङ्गं शुभच्छायम् ॥ ११

आजानेयमरोगं
जितेन्द्रियं श्लैष्मिकं महाकायम् ।
स्थिरशायिनं वयःस्थं
सुसंहताङ्गं महासारम् ॥ १२

रहितं सर्वैर्दोषैः
सर्वैः शुभलक्षणैः समायुक्तम् ।
सुमनसमनिन्दिताङ्गं
प्रियगन्धविलेपिनं शूरम् ॥ १३

ब्राह्मणमथवा क्षत्रिय-
मकर्कशं पुण्यगन्धमभिरूपम् ।

कुर्यात्तं हयराजं
तादृशमुपशीर्षकं महाराजः ॥ १४

परमाश्वः —

ईदृग्विधगुणयुक्तं
नयनमनोनन्दनं सदा हृष्टम् ।
परमाश्वं श्रवणादिभि-
रङ्गैः सर्वैस्तु देवमयैः ॥ १५

यस्य तु तुरगस्य भवे-
द्वर्णद्वयमर्कचन्द्राभम् ।
रक्तं बालार्कनिभं
श्वेतं संपूर्णसोमनिभम् ॥ १६

कथितः परमाश्वोऽयं
संभवतः सर्वलक्षणैः सुभगः ।
ब्रह्मादयो यस्य देवाः सर्वेष्वङ्गेषु संस्थिताः ।
मुखं ब्रह्मा यस्य चक्षुर्भास्करो भुजगः श्रुतौ ॥ १७

ललाटे च निशानाथो वामप्रोथे च निर्ऋतिः ।
बाह्वोश्चैवाश्विनौ ज्ञेयौ विज्ञेयो हेषिते घनः ॥ १८



BAD SITUATION FORĀVARTAS

*See : Verse No. 47. Page No. 30.*

ग्रीवायां पावकः काये वैकुण्ठो वक्षसि प्रभुः ।
जातो ह्येष जयार्थं वै देवानामाहवे सदा ॥ १९

यज्ञः स्वर्गपथः पुण्यः पार्थिवानां परं बलम् ।
य एवमेवं जानाति ज्ञात्वा यत्नेन पूजयेत् ॥ २०

स राजराजो भवति शक्रवत्पृथिवीपतिः ।

आभिषेचनिकोऽश्वः —

अभिषेच्यं शृणु हयं कीर्त्यमानमतः परम् ॥ २१

मुक्तावलीशङ्खहिमेन्दुसंनिभं
महाबलं भद्रमपार्श्वशायिनम् ।
क्षान्तं सुगन्धं सुकुलोद्भवं शुचिं
शूरं शुभावर्तमतीव रूपिणम् ॥ २२

शुभाननोष्ठं शुभतालुदन्तं
तेजोमयं सारबलैरुपेतम् ।
सत्त्वान्वितं दृष्टिमनोऽभिरामं
हृष्टं शुभावर्तगतिस्वरं च ॥ २३

श्रीमन्तं द्युतिमन्तं
जितेन्द्रियं श्लैष्मिकं महाकायम् ।
युवराजस्याभिमत-
मभिषेच्यं तं हयं कुर्यात् ॥ २४

क्षत्रियाश्वः —

स्फटिकतुषारशङ्खरजता-
मलहरिशशाङ्कसन्निभम् ।
अभिनवदाडिमीकुसुम-
विद्रुमबालदिवाकरोपमम् ॥ २५

अलिकुलकोकिलाञ्जनं
भुजङ्गमेघमषीसमप्रभम् ।
कनकसमप्रभं ज्वलितवह्नि-
शिखासदृशं तुरङ्गमम् ॥ २६

मनोरमं सिंहगजेन्द्रगामिनं
विभक्तसर्वाङ्गमनिन्द्रितानन्म् ।
सुस्निग्धरोमाणमशूलकं शुचिं
सत्त्वान्वितं क्षत्रियमाहुरश्वम् ॥ २७

सान्नाह्योऽश्वः —

वैश्यं कुलजं दान्तं
शूरं मेधाविनं प्रभायुक्तम् ।
शुभपुण्ड्रं शुभगन्धं
सन्नाह्यं वाजिनं कुर्यात् ॥ २८

औपवाह्योऽश्वः —

रूक्षकमथवा पाटल-
मरिष्टं पीतवर्णमथ गौरम् ।
रोमकमथवा धूसर-
चित्रं वा क्रौञ्चपत्रं वा ॥ २९

सुखवाहं दृढपादं
शूरं जितेन्द्रियं सुशीलं च ।
शुभगामिनं सुपृष्ठं
नान्येषां पृष्ठगं शीघ्रम् ॥ ३०

अत्रासितं प्रहृष्टं
विकटाटोपं मनोहरं शान्तम् ।

सन्नाह्यस्यैव समं
समुपवाह्यं हयं कुर्यात् ॥ ३१

सचिवाश्वः —

शुद्धार्काभं श्वेतं
रक्तं कृष्णं हरिं शभच्छायम् ।
क्षान्तं चैव वयःस्थं
तं तुरगं सचिवबाहनं कुर्यात् ॥ ३२

सान्नाह्यः —

श्वेतः सुप्रभगन्ध-
स्ताम्रत्वक्तालुदन्तखुरमुष्कः ।
तेजस्वी शुभनादः
सहयः सन्नाहिको नृपतेः ॥ ३३

शङ्खसिताश्च ललाटे
चत्वारश्चरणाः प्रदक्षिणावर्ताः ।
कलहंसभैरवरवः
सहयः सान्नाहिको नृपतेः ॥ ३४

राजाश्वः ——

सुमनाः पुष्पसवर्णः
श्वेतललाटः शुभच्छायः ।
मणिवैडूर्यशुभाक्षः
सुदीर्घपुण्ड्रो नरेन्द्राश्वः ॥ ३५

जीमूतवर्णो घनघोषहेषी
मध्वाज्यगन्धो गजहंसगामी ।
प्रियश्च माल्यस्य विलेपनस्य
सोऽप्यश्वराजो नृपवाहनं स्यात् ॥ ३६

यः शक्रगोपकायः
पारावतलोचनः स राजाश्वः ।
यस्तु शुचिः शुभगन्धः
शुभनादः सोऽपि नृपवाहः ॥ ३७

शोणप्रवालवर्णो
यो मणिवैडूर्यसदृशनयनोऽश्वः ।
दक्षिणकेशान्तस्था
शुक्तिश्चोर्ध्वायता यस्य ॥ ३८

तेन तुरगेण रणे
निःशेषं रिपुबलं विनिर्जित्य ।
प्रमुदितानिजबलसहितः
स्वस्थो नृपतिः समायाति ॥ ३९

हेमनिभो हरिरपरो
हरिणगतिर्हरिलोचनो हृष्टः ।
भुवमनुधावितुमिच्छति
स एष राजाश्व इत्युक्तः ॥ ४०

नन्दीमुखोऽश्वः —

श्वेतानि चरणमस्तक-
मुखानि तुरगस्य यस्य जायन्ते ।
नन्दीमुख नामासौ
तुरगः सर्वार्थसिद्धिकरः ॥ ४१

यस्तु प्रवर्त्यमानो
नितरामदयैर्महाशूरैः ।
अभिनन्दति गर्जन्तं
स खलु मतो व्याघ्रशाब इव ॥ ४२

मानोन्नतो विविक्तै-

रातङ्करहित आयुष्मान् ।

प्रतिलोमसलिलपायी

स शुद्धसत्त्वो नरेन्द्राश्वः ॥ ४३

येषां दीपशिखोपमा नयनयोरन्ता; दृशौ श्येनवत्;

ग्रीवा क्रौञ्चनिभा; गतिर्गजसमा; पादाः समुद्रोपमाः (?) ।

उद्वेगप्लुतिभिश्च वानरसमाः स्वैरं रणप्रेक्षका

शङ्खक्रौञ्चमृगेन्द्रदुन्दुभिघना व्याघ्रेभतुल्यस्वराः ॥ ४४

वक्षोभिर्हरिणाधिपप्रतिनिभैर्व्याघ्रोपमैर्बाहुभि-

रावर्तैस्तु शुभैः प्रधानकुलजा सुस्निग्धवर्णप्रभाः ।

उष्ट्राक्षाः प्रियदर्शनाः सवयसः श्वासैः सुगन्धैर्युता

धन्यास्ते जयराज्यवित्तसुखदाः सान्नाहिका भूपतेः ॥ ४५

श्यामकर्णलक्षणम् —

श्यामैः कर्णैः सितैः केशैः पुण्ड्रैस्तु दिनसान्निभैः ।

सर्ववर्णैस्तु विज्ञेयाः श्यामकर्णास्तुरङ्गमाः ॥ ४६

एवंरूपा वाहा
यत्र वसन्ति भवन्ति तत्र सस्यानि ।
न प्रभवन्त्युपसर्गा
वर्षति काले च पर्जन्यः ॥ ४७

नन्दन्ते हि च तरुणा
वृद्धा जीवन्ति वाजिनो निरूजः ।
हयराजानश्चैते
वसन्ति शुभलक्षणा यत्र ॥ ४८

तस्माद्राजा तुरगा
नेवंविधान्रूपलक्षणोपेतान् ।
गन्धैर्माल्यैर्बलिभिः
प्रपूजयेदागतान्विषये ॥ ४९

॥ इति राजवाहाध्यायः ॥

---



BAD SITUATION FOR ĀVARTAS

*See. Verse No 48, Page No. 30*



BAD SITUATION FOR ĀVARTAS

*See: Verse No 61, Page No. 32*

# ॥ आयुर्लक्षणाध्यायः ॥

---

आयुर्लक्षणमश्वानामत ऊर्ध्वं प्रवक्ष्यते ।
शालिहोत्रादिभिः प्रोक्तं यथापूर्वं तपोधनैः ॥ १

सुमहान्तश्च ये वाहा ह्रस्वकर्णास्तथैव च ।
स्वरनेत्रस्वभावेषु न दीनाश्चिरजीविनः ॥ २

महाघोणा महाकाया ये चाश्वाः पृथुवक्षसः ।
तेषां दीर्घं भवेच्चायुः स्निग्धाङ्गाश्चैव ये सदा ॥ ३

कर्णाग्रे पीडिते येषां सिन्दूराभस्य दर्शनम् ।
शोणितस्य भवेत्क्षिप्रं ते मताश्चिरजीविनः ॥ ४

नभो जिघ्रन्ति ये चापि तेऽपि दीर्घायुषो मताः ।
विनिष्किरन्ति ये ग्रासं स्वग्रासाय तुरङ्गमाः ॥ ५

कुष्टिकायां किणा येषां दृश्यन्ते वाजिनां स्फुटाः ।
प्रशस्तं च भवेद्वक्षो येषां ते दीर्घजीविनः ॥ ६

पद्मपत्रदलाकारं जिह्वाग्रे यदि वाजिनः ।
दन्ताश्च मौक्तिकाकाराः लिङ्गं येषां च निर्मलम् ॥ ७

सीत्कारश्च भवेद्येषां लाङ्गूले चलनं पुनः ।
प्रस्वेदः शुभगन्धस्तु नखा वै दर्पणोपमाः ॥ ८

येषां च दीर्घमानं वै ते सर्वे चिरजीविनः ।
स्निग्धगम्भीरदीर्घाश्च प्रोथजा यस्य वाजिनः ॥ ९

भवन्ति विपुला रेखास्तं विन्द्याद्दीर्घजीविनम् ।
छत्रचामरभृङ्गारखड्गाङ्कुशनिभास्तथा ॥ १०

शक्तिवज्रगदाकारा ध्वजादिसदृशास्तथा ।
ऊर्ध्वं प्रोथस्थिता रेखा यस्य वामेन चानताः ॥ ११

ह्रस्वा वा यस्य वाहस्य न चिरं तस्य जीवितम् ।
श्रीवृक्षस्वस्तिकाभासाः प्रोथे रेखाश्चिरायुषम् ॥ १२

ऊर्ध्वं प्रोथे समा रेखा दृश्यन्ते यस्य वाजिनः ।
तस्य मृत्युः समुद्दिष्टो दशमं प्राप्य वत्सरम् ॥ १३

अङ्गुलाभं दश द्वे च वर्षाणां तस्य जीवितम् ।
त्रयोदश स जीवेत्तु यस्य स्युश्चतुरङ्गलाः ॥ १४

तिर्यगेवोर्ध्वगे चैव द्वे रेखे यस्य वाजिनः ।
प्रोथजे यस्य वाहं तं विन्द्यादेवं चतुर्दश ॥ १५

दक्षिणेन च पार्श्वेन यः शेते सर्वदा हयः ।
बहुमूत्राल्पमूत्राश्च ते चिरञ्जीविनो हयाः ॥ १६

विनतः पूर्वकायेन स्थले जान्वोश्च यो हयः ।
सूना(?)क्षकूटस्तन्द्राक्षः स्वल्पायुः स प्रकीर्तितः ॥ १७

॥ इत्यायुर्लक्षणम् ॥

---

## ॥ उत्पातप्रकरणाध्यायः ॥

---

अतः परं प्रवक्ष्यामि तुरगाणां विभागतः ।
ज्वलितेन यथाऽङ्गेन फलं वाच्यं शुभाशुभम् ॥ १

यदा ज्वलति वाहस्य सर्वगात्रं हुताशवत् ।
तदा विन्द्यादनावृष्टिं वर्षमेकं न संशयः ॥ २

अतः पुरविनाशस्तु मेहने ज्वलिते भवेत् ।
उदरे वित्तनाशस्तु पायौ पुच्छे पराजयः ॥ ३

उत्तमाङ्गे च वक्त्रे च घोणायां चासने तथा ।
भर्तुर्भयं च वाहानां ज्वलितं यत्र नेत्रकम् ॥ ४

धूमो ललाटे बाह्वोश्च तथा वक्षसि निन्दितः ।
तत्रैव ज्वलनं शस्तं तथा नासासमुद्भवम् ॥ ५

यदा व्याधिं विना वाजी ग्रासं त्यजति दुर्मनाः ।
अश्रुपातं च कुरुते तदा भर्तुरशोभनम् ॥ ६

स्वयेमव यदा वक्रमोष्ठौ कम्पयते हयः ।
कविभिः काव्यनिर्दिष्टं तदा विन्द्याज्जयं प्रभोः ॥ ७

सर्वदैवविरोधस्तु सर्वेषां नैव पूजितः ।
वामपादाभिघातस्तु प्रभोर्यात्रानिषेधकः ॥ ८

स्वामिनाऽऽरूढमात्रेण दक्षिणं पार्श्वमात्मनः ।
तुरङ्गमो यदा पश्येत्तदा भर्तुर्जयो भवेत् ॥ ९

अकस्माद्दन्तपातश्च तेषां भीतिः प्रभोः स्मृता ।
पुच्छवालान्स्वयं बाह्योर्वामतो विकिरेद्यदा ॥ १०

तदा भर्तुः प्रवासः स्याद्दक्षिणे विजयं तथा ।
प्रकिरन्ति यदाऽऽत्यर्थं सर्वं पुच्छं तुरङ्गमाः ॥ ११

॥ इत्युत्पातप्रकरणाध्यायः ॥

---

## ॥ वाहनशिक्षाध्यायः ॥

---

ब्रह्मणैव यथा दिष्टो वाहानां वाहनो विधिः ।
सारं तस्य समुद्धृत्य सर्वं तत्कथयाम्यहम् ॥ १

तुरङ्गवाहकस्यापि दोषस्य च गुणस्य च ।
विशेषं संविधानेन तत्सर्वं कथयाम्यहम् ॥ २

साम न ज्ञायते यस्माद्दृढरूपेण वादयेत् ।
साम प्रदानं दण्डं च विविधं विनियोजयेत् ॥ ३

त्रासी लुब्धः क्षुधालुश्च विप्रः संपरिकीर्तितः ।
शूरश्च दृढमन्युश्च क्षत्रिय स्तुरगः स्मृतः ॥ ४

पापिनः कल्परूपाश्च दुष्टा वैश्याः प्रकीर्तिताः ।
विरूपा विषमाश्चैव शूद्राश्चण्डा उदाहृताः ॥ ५

ब्राह्मणं शक्तिदानेन साम्ना च क्षत्रियं हयम् ।
वैश्यं दण्डेन शब्देन शूद्रं दण्डेन वाहयेत् ॥ ६

प्रत्यूषे वाहयेद्विप्रं क्षत्रियं प्रहरे गते ।
वैश्यं सन्ध्यां गते काले शूद्रं रात्रौ च वाहयेत् ॥ ७

सत्त्वं च त्रिविधं प्रोक्तमुत्तमाधममध्यमम् ।
उत्तमं चोपशापेन साम्ना दण्डेन मध्यमम् ॥ ८

शब्दयोगेन दण्डेन वाहयेदधमं बुधः ।
सहजे निर्मले वाहे तैलदुग्धस्य रूपवत् ॥ ९

शास्तिश्च द्विविधा प्रोक्ता बलदौर्बल्यसंभवा ।
बलिष्ठो दुर्बलत्वेन दुर्बलोऽपि बलेन वा ।
बलेनोपाधितश्चैव सत्त्वं ज्ञात्वा च वाहयेत् ॥ १०

आर्द्रां सुकठिनां चैव पाषाणोदकसंयुताम् ।
तृणकाष्ठसमायुक्तां रङ्गभूमिं तु वर्जयेत् ॥ ११

समां च विपुलां चैव किञ्चित्पांसुसमन्विताम् ।
एकान्ते विजने रम्ये रङ्गभूमिं तु कारयेत् ॥ १२

स्थूलः क्रोधी च मूर्खश्च चित्तौत्सुक्यश्चलासनः ।
अस्थाने दण्डपाती च वाजी तस्य न सिध्यति ॥ १३

प्रचलत्यासनं यस्य ऊर्ध्वं दण्डनिपातनम् ।
न तस्य वाहनं वाजी दुर्लभं वाजिवाहनम् ॥ १४

दृढासनोऽथ तत्त्वज्ञो जितमुष्टिर्निरालसः ।
अविरागी स्थिरश्चापि षडेते वाजिवाहकाः ॥ १५

चित्तं यो नैव जानाति तुरगस्य समासतः ।
न वहन्ति हयास्तस्य दण्डपातेन ताडिताः ॥ १६

हेषिते चलिते भीते तथा चोन्मार्गगामिनि ।
कुपिते भ्रान्तचित्ते च षट्सु दण्डं निपातयेत् ॥ १७

हेषिते ताडयेन्मूर्ध्नि जानुभ्यां चलिते तथा ।
क्रुद्धे उरसि हन्तव्यो भ्रान्तचित्ते तथोदरे ॥ १८

भीतं च ताडयेत्पश्चान्मुखे चोन्मार्गगामिनम् ।
ज्ञात्वा दोषं च रूपं च स्थानेष्वेतेषु ताडयेत् ॥ १९

अस्थाने ताडितो वाजी यावज्जीवं न सिध्यति ।
नो जहाति च तद्दोषं यावज्जीवत्यसौ हयः ॥ २०

॥ इति वाहनशिक्षाध्यायः ॥

---

# ॥ धाराऽध्यायः ॥

धाराः पञ्च प्रवक्ष्यामि मुनिभिर्याः प्रकीर्तिताः ।
प्रथमा विक्रमा धारा द्वितीया पुलका स्मृता ॥ १

तृतीया पूर्णकण्ठी तु चतुर्थी त्वरिता स्मृता ।
पञ्चमी चैव या धारा निरालम्बा प्रकीर्तिता ॥ २

षष्ठी चैव तु या धारा श्रूयते न तु दृश्यते ।
विक्रमा गतिधारा च चतुष्का पुलका मता ॥ ३

मुखपादसमायुक्ता पूर्णकण्ठी तु सा भवेत् ।
स्वेच्छया त्वरिता धारा ताडिता चैव पञ्चमी ।
षष्ठी चैव तु या धारा स्वर्गलोके महीयते ॥ ४

वल्गाश्च संप्रवक्ष्यामि मुनिभिर्याः प्रकीर्तिताः ।
पुष्पवन्ती च गोकर्णी तूलोत्तूला चला तृषा ॥ ५

नामखण्डी पुष्पधारा दृढमुष्टी चतुस्तनी ।
द्विहस्ता चैकहस्ता च सुभगा शोभना मता ।
इत्येते द्वादश वल्गाः मुनिभिः परिकीर्तिताः ॥ ६

॥ इति धाराध्यायः ॥

## ॥ आरोहविधानाध्यायः ॥

आरूढः कर्णमध्ये तु मनो लक्ष्येत वाजिनः ।
शनैस्तं वाहयेत्पूर्वं शिशुतुल्यं समादिशेत् ॥ १

न वक्रो न तथोत्तानो न कुब्जो नाप्यधोमुखः ।
न भयस्तब्धगात्रश्च स भवेदश्ववाहकः ॥ २

स्थिरोरुः स्थिरपादश्च त्रिकोन्नम्रः स्थिरासनः ।
दक्षिणादिस्तुरङ्गस्य चासने तु दृढः सदा ॥ ३

अश्ववाहः समाख्यातः शेषास्ते भारदायकाः ।

वाहनकालः —

ग्रीष्मादिषु न कर्तव्यमृतुषु त्रिषु वाहनम् ॥ ४

हेमन्तादिषु कर्तव्यं सादिभिः शास्त्रवेदिभिः ।
प्रतिपत्सु त्रयोदश्यां नवम्यां वा सिते दले ॥ ५

धृतिसिद्ध्यादियोगेषु वासरे चन्द्रसूर्ययोः ।
मूलरोहिणिहस्तेषु पुष्ये वै चोत्तरासु च ॥ ६

एवंविधे दिने सादी वाहनं वाहयेच्छुभम् ।

वाहनविधिः —

रङ्गभूमौ रैवतकं प्रसिद्धं स्थापयेत्ततः ॥ ७

पुष्पैर्धूपैः प्रदीपैश्च चन्दनैः पायसैस्तथा ।
पक्वान्नैः पञ्चगव्यैश्च प्रातः शुचिः सुवाससाः ॥ ८

रक्ताम्बरधरो भूत्वा रक्तपुष्पधरस्तथा ।

**ओं नमो रैवताय अश्वहृदयाय ह्रीं क्रीं ओं नमः श्वेताय सौम्यरूपाय इममश्वं साधय साधय बन्धय वश्यं कुरु कुरु महावीर्याय रैवताय नमः ।**

एतन्मन्त्रं जपेत्प्राज्ञो हयस्य दक्षिणे श्रुतौ ।
एकविंशतिवारं च ततः पर्याणयेद्धयम् ॥ ९

क्रोशमेवं तमारुह्य नयेद्दीर्घं शनैः शनैः ।
वल्गाः ग्रहं च कर्तव्यं सव्यं चासव्यमेव च ॥ १०

विक्रमा पुलका पूर्णा कटी च त्वरिता तथा ।
खलीनादौ प्रयोक्तव्या सादिना वाजिनां क्रमात् ॥ ११

नातिस्थूलं नातिकृशं न स्तब्धं नातिकर्कशम् ।
सप्ताङ्गुलप्रमाणं तु खलीनं कारयेद्बुधः ॥ १२

खलीनादिषु लोहेषु धारयेद्विक्रमादिषु ।
क्रमेणैव तुरङ्गाणां कटकानि प्रयोजयेत् ॥ १३

खलीनादौ च धारासु पदेषु शिक्षितो हयः ।
तदा करेषु स्तब्धांसं वाहयेद्विक्रमादिभिः ॥ १४

शतहस्ताधिकां भूमिं सप्तहस्तावसानिकाम् ।
भ्रामयेद्वाजिनं सादी सव्यं चैवापसव्यकम् ॥ १५

मण्डलं चतुरश्रं च गोमूत्रं चार्धचन्द्रकम् ।
नागपाशं क्रमेणैव भ्रामयेत्कटपञ्चकम् ॥ १६

एवमन्येषु लोकेषु त्रिधैव भ्रामयेत्कटे ।
य एवं वाहयेद्वाहं तस्य कष्टं न जायते ॥ १७

दद्याद्भयमभीतस्य भीतस्यापि हरेद्भयम् ।
रहस्यं सादिनामेतद्वाहनेऽस्ति त्रिधोदितम् ॥ १८

पूर्वोक्तेषु च देशेषु बहु दोषेषु ताडयेत् ।
न जातु सादिनाऽन्यस्मिन् काले दोषशतैरपि ॥ १९

दम्यमानस्य चाश्वस्य यो दोषः सादिदोषतः ।
ज्ञायतेऽसौ निराकर्तुं सादिना नैव शक्यते ॥ २०

एवं शास्त्रविधानेन यः सादी वाहयेद्धयान् ।
हरयस्तस्य सिद्ध्यन्ति भवन्ति फलदायकाः ॥ २१

वाहनं यद्यदुष्टं च धूपलेपनमन्त्रकैः ।
तदहं संप्रवक्ष्यामि मुनिभिः कीर्तितं यथा ॥ २२

अस्थिभिर्दशनैश्चैव वृकानां च तथा बुधः ।
विषैर्मकरदंष्ट्राभिर्धूपसंयुक्तसर्पिषा ॥ २३

एलागरुमदोशीरनागकेसरचन्दनैः ।
स्वर्जिकातैलसंयुक्तैर्धूपयेद्दुष्टवाजिनम् ॥ २४

विषलोहमदैलाभिस्तैलाज्यदधिचन्दनैः ।
अशेषदोषनाशाय धूपः प्रोक्तो हि वाजिनाम् ॥ २५

विलेप्य गोमयैः प्रातर्निशीथे सर्वसन्धिषु ।
अष्टम्यां च विशेषेण दुष्टाः सिद्ध्यन्ति धूपिताः ॥ २६

कीलासचन्दनं कौन्ती सिद्धार्थं मरिचानि च ।
अञ्जनं सर्वदुष्टानां देयं पर्वाणि पर्वणि ॥ २७

अञ्जनाभ्यञ्जितो वाजी निर्वाणमभिगच्छति ।
कोपं मोहं भयं त्यक्त्वा वश्यः स्यात्सादिनो भृशम् ॥ २८

प्रातः सादी शुचिः स्नातः शुक्लाम्बरधरस्तथा ।
उपोषितो यमी भूत्वा जपेत्कर्णेऽथ दक्षिणे ॥ २९

हय गन्धराज त्वं शृणुष्व वचनं मम ।
गन्धर्वकुलजातस्त्वं मा भूयाः कुलदूषणम् ॥ ३०

द्विजानां सत्यवाक्यानां सोमस्य गरुडस्य च ।
रुद्रस्य वरुणस्यैव पवनस्य बलेरिव ॥ ३१

हुताशनस्य दीप्तस्य स्मर जातिं तुरङ्गम ।
स्मर राजेन्द्रपुत्रस्त्वं सत्यवाक्यमनुस्मर ॥ ३२

स्मर त्वं वारुणीं कन्यां स्मर त्वं कौस्तुभं मणिम् ।
क्षीरोदसागरे चैव मथ्यमाने सुरासुरैः ॥ ३३

तत्र देवकुले जातः स्ववाक्यं परिपालय ।
कुलजातस्त्वमश्वानां मित्रं मे भव साधनम् ॥ ३४

शृणु मित्र त्वमेतद्वै सिद्धो मे भव वाहन ।
विजयं मे धनं चैव सङ्ग्रामे सिद्धिमावह ॥ ३५

तव पृष्ठं समारुह्य जेष्यामि रिपुवाहिनीम् ।
मन्त्रजापं ततः कृत्वा मन्त्रेणानेन वृद्धिमान् ॥ ३६

विसृज्य सर्वदेवांश्च ततः पर्याणयेद्धयम् ।
वाहनेषु च ये वर्गाः कुर्वन्ति हरिवाहनम् ।
सुहृदस्तव वाहानामन्ये तु हरयस्तव ॥ ३७

॥ इत्यारोहविधानाध्यायः ॥

इति

नकुलसङ्गृहीतं अश्वशास्त्रं समाप्तम् ॥

---

# ॥ अनुबन्धः ॥

---

अत्र

नकुलसंङ्गृहीतेऽस्मिन् ग्रन्थे

अनुपलभ्यमानाः केचन विषयाः

सरस्वतीमहालये समुपलब्धेभ्यः

अश्वसंबन्धिभ्यो ग्रन्थान्तरेभ्यः

समुद्धृत्य

दीयन्ते ॥

मल्लदेवपण्डितविरचितात्

सारसिन्धोरुद्धृतोऽयं भागः ।

---

## ॥ अन्धबधिरादिविज्ञानम् ॥

---

अन्धः —

एकाकिन्येति कस्यापि पृष्ठं यातीक्ष्यते नभः ।
उत्क्षिप्तपादविन्यासः सोऽश्वोऽन्धोऽन्योक्तिदत्तधीः ॥ १

बधिरः —

उत्कर्णो वीक्षतेऽन्यत्र हयः शब्दापितोऽन्यतः ।
तर्जनं वा न जानाति सोऽश्वो बधिर उच्यते ॥ २

मूकः —

हेषां विधातुं तुरगोऽसमर्थो
गर्भानिलोद्रेकनिकृष्टजिह्वः ।
गृह्णाति कृच्छ्रेण तृणं कृशाङ्गः
सप्तिः स मूकः कथितः कवीन्द्रैः ॥ ३

जडः —

श्रृण्वन्न गृह्णाति वचोऽथ शिक्षां
सन्तर्जनं ताडनकं न वेत्ति ।
संप्रेक्षतेऽन्यत्र हयोऽपरत्र
शैथिल्यकायः कथितो जडोऽश्वः ॥ ४

षण्डः —

आघ्रातमुष्कः स्थविरस्तुरङ्ग्यां
वीतस्पृहो वीतमनोजकेलिः ।
आघ्रातलिङ्गमलमूत्रको यः
षण्डं तमश्वं समुदाहरन्ति ॥ ५

कोशमोही —

केशान्तस्थितलिङ्गेन मूत्रं शुक्लं विमुञ्चति ।
योऽशक्तस्तुरगीं रन्तुं कोशमोही स उच्यते ॥ ६

कुमारिका —

या वाहनिवहाद्भीता बहिश्चरति नेच्छति ।
सङ्गं तुरङ्गबृन्दस्य ज्ञेया सा च कुमारिका ॥ ७

अन्धाद्याश्च कुमार्यन्तास्तुरङ्गा मङ्गलार्थिभिः ।
निन्दिता दूरतस्त्याज्याः प्राज्ञैर्निर्व्यसनैर्जनैः ॥ ८

॥ इत्यन्धबधिरादिविज्ञानम् ॥

## ॥ अङ्गमानविज्ञानम् ॥

अथ *प्रदेशोऽङ्गुलमानमाद्यै-
रुदीरितं तत्प्रतिपादयामि ।
सृक्वोत्तरोष्ठभ्रुवपायुकक्ष-
वहप्रदेशाश्चतुरङ्गुलाः स्युः ॥ १

ककुन्नासापुटप्रोथवर्त्मनाभिविलोचनम् ।
प्रदेशास्त्र्यङ्गुलं प्रोक्ताः प्रदेशज्ञानपारगैः ॥ २

प्रपाणशङ्खचिबुककटि द्व्यङ्गुलमुच्यते ।
उत्तमाङ्गो विदुक्रोडकर्णदेशाः षडङ्गुलाः ॥ ३

घोणागण्डहनोर्देशा विज्ञेयाः षोडशाङ्गुलाः ।
त्रिंशदङ्गुलिके पार्श्वे ललाटं द्वादशाङ्गुलम् ॥ ४

* अङ्गुलं तु भास्कराचार्यस्य लीलावत्यां परिभाषाप्रकरणे लक्ष्यते; यथा — "यवोदरैरङ्गुलमष्टसङ्ख्यैः" इति । तच्च यवाभिधानानां धान्यानामुदरतः परिस्तरणे (00000000) संभाव्यमानं दैर्घ्यम् । अथवाऽङ्गुलेः परिस्तृतस्य तिर्यङ्मानम् । आयुर्वेदिनस्तु "अङ्गुलं त्रियवं मतम्" इति वदन्तः, त्रयाणां यवानां पुच्छात्पुच्छं परिस्तृतानां दैर्घ्यं (⬭⬭⬭) गृहीत्वेत्यभ्युपगन्तव्याः ॥

विंशदङ्गुलिकं कोष्ठं(?) जिह्वा द्वात्रिंशदङ्गुलः ।
हृदयं त्र्यङ्गुलं प्रोक्तं द्वादशाङ्गुलमायतम् ॥ ५

एकाङ्गुलो निगालः स्यान्मानमेतद्धयोत्तमे ।
पादोनं मध्यमे प्रोक्तमर्धहीनं कनीयसः ।
इति प्रदेशनिर्देशः शंसितः संशयच्छिदे ॥ ६

---

शालिहोत्रवैशम्पायनीयाभिधात्

सारसिन्धोरुद्धृतोऽयं भागः ।

## ॥ मनस्तत्त्वविज्ञानम् ॥

---

भीतिः —

लोहस्थाने प्रहारे च भीरुरश्वो द्वयोर्मतः ॥ १

हास्यम् —

अच्छिन्नपादबाहुर्यः पतितो रणभूमिषु ।
तं विलोक्य हसेद्वाजी हास्यं चैकत्र विस्तृतम् ॥ २

चाञ्चल्यम् —

जिह्वां च कर्णौ नयने पदानि
पुच्छं च शस्तानि तु चञ्चलानि ।
एवं मनोज्ञावयवास्तुरङ्गाः
कुर्वन्ति भर्तुर्विजयं च सौख्यम् ॥ ३

प्रहर्षः —

पट्टाभिषेके चणकस्य खादने
सुवर्णमालासु च किङ्किणीरवे ।
भर्त्रू(?)पचारे सुगुणाधिरोहे
षट्सु प्रहर्षं प्रवदन्ति चाश्वे ॥ ४

धैर्यं —

लोहबन्धे क्षते रोगे युद्धे गजभटाकुले ।
जले चाग्निवृते क्रूरे धैर्यं नवसु(?) वाजिनः ॥ ५

कोपः —

शिक्षाकालेऽथ वाहानां कशाघातेऽधिरोहणे ।
खाद्यान्तरशिलाज्ञाने हयानां कोपसंभवः ॥ ६

दुःखम् —

अनुचितकशाघाते पादचारिप्रहारे
सुगतिषु च तथाऽङ्गे स्कन्धतः स्फालने च ।
अनिपुणवशदत्ते युद्धकाले प्रवासे
गलितवयसि रोहे सप्तके दुःखितोऽश्वः ॥ ७

हेषितम् —

गर्भाधान ऋतौ काले युद्धकाले जयेऽध्वरे ।
खादने यावसे चैव सुशीलारोहणेऽपि च ॥ ८

ससङ्ग्रहपरित्यागे अपूर्वाश्वावलोकने ।
हेषितं दशसु प्रोक्तं वाजिलक्षणकोविदैः ॥ ९

उत्साहः —

खादने भोजने चैव भक्षणे तृणमांसयोः ।
गुडोदके तथोद्वर्ते उत्साहः षट्सु वाजिनः ॥ १०

लज्जा —

असाम्यवेगेऽनुगते द्वितीये
छायातुरङ्गादिव लज्जमानः ।

खुरोत्थितैर्वीरतुरङ्गमस्तु
रजोभिरह्नः पतिमावृणोति ॥ ११

क्रयशकुनम् —

हेषारवं च कुरुते विसृजेत्पुरीषं
पुच्छं धुनोति खनते धरणीं खुरेण ।
सूर्यं विलोकयति नूत्नजने हि दृष्टे
पृष्टं स्पृशेत्पदनखैः स हि लाभदोऽश्वः ॥ १२

॥ इति मनस्तत्त्वविज्ञानम् ॥

---

## ॥ अश्वोपयोगिसामग्रीविज्ञानम् ॥

---

कशा —

मूलेऽङ्गुष्ठमिता मृदुः सुललिता वृत्तानुपूर्वा यथा
गोपुच्छाकृतिका कराग्रजनिताघातेन शब्दन्विता ।
सीराभिस्तनुभिर्दृढं विरचिता छागत्वचा संचिता
क्रूराग्रा करवीरपत्रसदृशा चञ्चत्प्रकाशा कशा ॥ १

पाननलिका —

नाड्या वेणुमयाद्विपर्वकृतयाऽङ्गुष्ठाकृतिच्छिद्रया

प्रायः षोडशकाङ्गुलायततया तीक्ष्णास्त्रकर्णाग्रया ।

प्राग्बध्वा मृदुरज्जुनोत्तररवं मध्वाज्यतैलादिका

न्नो(?)शीर्घं वितरेद्धयस्य वदने क्षीरं जलं चाग्रतः ॥ २

अक्षिमाला —

अश्रुपातव्रणं श्लिष्टं मक्षिकामशकापहम् ।

चर्मसूत्रेण बध्नीयादक्षिरोगं च नाशयेत् ॥ ३

अष्टौ भोगाः —

स्थानं शय्या च विस्तीर्णा सुतृणं शुद्धखादनम् ।

सुगन्धानि च पुष्पाणि यवान्नं क्षीरभोजनम् ।

अष्टभोगमिति प्रोक्तं शालिहोत्रेण धीमता ॥ ४

खुरत्रम् —

खुरत्रं तु खुरस्याधः सुश्लिष्टं सान्द्रलाघवम् ।
आयसं वर्तुलाकारं मण्डूकीतलनिस्पृशम् ॥ ५

खलीनम् —

आयसं दान्तिकं वाऽपि सृक्किद्वयसमन्वयम् ।
जिह्वान्तर्य(?)समानं च खलीनं तुरगोचितम् ॥ ६

॥ इत्यश्वोपयोगिसामग्रीविज्ञानम् ॥

---



KING'S HORSE

# அசுவ சாஸ்திரம்

## குதிரைகளின் பெருமை

சக்தி கணேசன், வாக்தேவீயான ஸரஸ்வதி, சந்திரசேகரனை ஸதாசிவன் இந்த தெய்வங்களுக்கு வணக்கம் கூறி இந்த அசுவ சாஸ்திரம் ஆரம்பமாகிறது.

பிறகு குதிரை நூல்களின் உண்மையறிந்த புராணப் பெருமக்களான—ஸ்ரீ கிருஷ்ணன், தருமன், பீமன், அர்ஜுனன், நகுலன், சகதேவன்—இவர்களுக்கு வெற்றிக்கட்டியம் கூறப்படுகிறது.

பாண்டவர்களுக்குள் ஒருவனை நகுலன்—இந்த அசுவ வித்யைக்கே மூலம் கண்ட முனிவரான சாலிஹோத்திரர் அவருடைய சீடர்களான ஸுச்ருதர் கர்கர் முதலியவர்களுடைய நூல்களை ஆராய்ந்து இந்த அசுவ சாஸ்திரத்தைத் தொகுத்துக் கொடுக்கிறான்.

குதிரை — மக்களுக்கு — முக்கியமாக அரசர்களுக்கு மிகவும் உபயோகமுள்ள பிராணி. ஒரு அரசனுக்கு நல்ல குதிரைகள் மட்டும் கிடைத்து விட்டால் அவனுக்குக் கிடைக்காதது ஒன்றுமே இல்லை. சென்றவிடமெல்லாம் வெற்றியும் புகழும் நிரந்தரமாகக் கிடைக்கும்.

யுத்தத்தில் எதிரிகளின் படைகளுக்குள் துணிச்சலுடன் புகுவதற்கோ, அங்கு அடிபட்டுச் சோர்ந்து விட்டால் சமாளித்துத் தப்புவதற்கோ குதிரையைத் தவிர வேறு எந்த வாகனமும் உபயோகப்படாது.

அந்தக்காலத்தில் அவசரச் சேதிகளை தூர தேசங்களுக்கு அனுப்புவதற்கும் குதிரைதான் சிறந்த சாதனம். குதிரைகளை வெகு சீக்கிரத்தில் கூட்டி மன ஒற்றுமைப்படுத்திவிடமுடியும்; தன்னந்தனியாகவும் பயமின்றிச் செலுத்தமுடியும். வேலைக்களத்தில் பலநாட்களுக்குக்கூட அன்ன ஆகாரமின்றி வேலைசெய்ய குதிரை சளைக்காது. திடீரென்று ஏற்படும் காலநிலை மாறுதல்களுக்கும் ஈடுகொடுத்து பயமின்றி யுத்தத்தில் வெற்றிகாணும் வரை சோர்வின்றித் துடித்துநிற்கும் மிருகம் குதிரை ஒன்றுதான். ஆகவே குதிரைகளின் இலக்கணமறிந்து தேர்ந்தெடுத்துப் பராமரிக்கும் ஒருவனுக்கு அதனால் எல்லாவித நன்மைகளும் கிட்டும். என்று சாலிஹோத்திரர் அறுதியிட்டுக் கூறுகிறார்.

(இந்த அத்தியாயம் — தஞ்சை ஸரஸ்வதீமஹாலில் அகப்படும் — பல ஆசிரியர்களால் செய்யப்பட்ட குதிரையைப்பற்றிய—நூல்கள் எல்லாவற்றிலும் சிற்சில மாறுதல்களுடன் காணப்படுகிறது. ஆகவே அந்தந்த ஆசிரியர்கள் குதிரைகளைப்பற்றி எழுத ஆரம்பிக்குமுன் சாலிஹோத்திரர் கூறிய குதிரையின் பெருமைகளை முகவுரையாகக்கொண்டு தம் நூல்களை எழுத ஆரம்பித்திருக்கிறார்கள் எனக் கொள்ளலாம்.)

# ரைவதர் துதி

(ரைவதர் சூரியனுக்கும் அவர் மனைவி சாயா தேவிக்கும் பிறந்தவர். இவரைப்பற்றி பின்வரும் வரலாறு அக்னிபுராணத்தில் காணப்படுகிறது:— சூரியனின் வெப்பம் தாங்கமுடியாமல் அவர் மனைவி சாயாதேவி ஒருநாள் வானளாவிய மரங்கள் அடர்ந்த விந்தியமலைச்சாரலுக்குச் சென்று பெண் குதிரை உருவத்தில் உலவிக்கொண்டிருந்தாள். வெகுநாள் எதிர்பார்த்தும் சாயாதேவி வராததால் சூரியன் ஒரு நாள் தன் ஞானக்கண்ணுல் சாயாதேவியின் இருப் பிடத்தையும் அவள் வடிவத்தையும் தெரிந்து கொண்டு தானும் ஆண் குதிரை உருவம் புனைந்து கொண்டு விந்தியமலைச்சாரலுக்கு வந்தார். பெண் குதிரை ஆண்குதிரையின்மேல் மையல் கொண்டது. இரண்டும் முகத்திற்கு முகம் பொருத்த அந்த முகங்களிலிருந்து தோன்றினவர்கள் — அச்வினி தேவர்கள் என்று போற்றப்பட்ட இரட்டையர் களான தேவவைத்யர்கள். அப்பொழுது நழுவிய வீர்யத்தில் தோன்றினவர் ரைவதர். அவர் பிறக் கும்பொழுதே குதிரைமீதேறி கையில் வில்லம்பும் கத்தியும் தாங்கியவர்.) இந்த ரைவதருடைய இருபத் தெட்டு நாமங்கள் இங்கு கூறப்படுகின்றன. இவற்றை காலையில் எழுந்தவுடன் ஒருவன் உச்சரித் தால் அவனுடைய குதிரைகளுக்கு பேய்பிசாசுகள் பிடிக்காது. இந்த ஸ்தோத்திரத்தை நாரதர் எடுத்துக்கூறுகிறுர். இருபத்தெட்டு நாமங்களாவன: 1. ரைவதர்; 2. பார்த்திவர்; 3. வீரர்; 4. அருணர்;

5. மாத்ருகோலாஹலர்; 6. பஞ்சக்ரீவர்; 7. அசுவ புருஷர்; 8. பிண்டகீ; 9. ஹயவாஹகர்; 10. சூர்ய புத்திரர்; 11. மஹாஸ்வாமி; 12. சாயாஹ்ருதய நந்தனர்; 13. நாரதானந்தகாரி; 14. ஹ்ருதயக்ஞர்; 15. ரணப்பிரியர்; 16. பாஸ்வான்; 17. ரத்னவதீ பர்த்தா; 18. நிர்பயர்; 19. பயவிக்னஹா; 20. பூதேசர்; 21. தர்ஜனர்; 22. பத்ரர்; 23. அபூதேசர்; 24. பக்தவத்ஸலர்; 25. ஆரோக்ய ஸ்மரணர்; 26. வைத்யர்; 27. ஸர்வரட்சாகரர்; 28. சிவர்.

## குதிரை இறக்கை இழந்த வரலாறு

முன்காலத்தில் குதிரைகள் இறக்கைகளுடன் ஆகாயத்தில் கந்தர்வர்களுடன் சுயேச்சையாகப் பறந்துகொண்டிருந்தன. அவற்றின் உடலமைப்பையும் பலத்தையும் லாகவத்தையும் தேவேந்திரன் கவனித்து சாலிஹோத்திரரிடம் சென்று சொன்னான்: "முனிவரே! உங்களுக்குத் தெரியாதது ஒன்றுமில்லை. இந்தத் திமிர்பிடித்த அசுரர்களுடன் போராடுவதற்கு எங்கள் யானைகளால் முடியவில்லை. இந்தக் குதிரைகளைப் பார்த்தால் போருக்கு மிகவும் உபயோகப்படும் என்று தோன்றுகிறது. ஆனால் இந்த இறக்கைகளை மட்டும் தாங்கள் போக்கிவிடவேண்டும்."

சாலிஹோத்திரரும் தேவேந்திரன் விருப்பப்படி குதிரைகளின் இறக்கைகளை ஐஷீகாஸ்திரம் கொண்டு வெட்டித் தள்ளினார்.

இறக்கைகளை இழந்த குதிரைகள் இரத்தம் சொட்டச் சொட்ட தம் தந்தைக்கொப்பான சாலி ஹோத்திரரிடம் வந்து கண்ணும் கண்ணீருமாக முறையிட்டன. "ஐயனே! ஒரு தவறுமிழைக்காத எங்கள் இறக்கைகளை ஏன் இப்படிக் களையவேண்டும்? தாங்கள் தான் இனி எமக்கு எக்காலமும் சுகம் கிட்ட அருள்புரியவேண்டும்."

சாலிஹோத்திரரும் மனமிரங்கி அவர்களுக்கு ஆறுதல் கூறினார். "குதிரைகளே, வருந்தாதீர்கள். உங்களையும் இவ்வுலகத்திற்கு உபயோகமுள்ள பிராணிகளாக்கவேண்டும் என்ற நோக்கத்தினால் தேவேந்திரன் விருப்பத்திற்கிசைந்து உங்கள் இறக்கைகளைப் போக்கினோம். இனி நீங்கள் சூரியன் முதலிய தேவர்களுக்கும் அரசர்களுக்கும் வாகனம் என்ற பெரும் பேறு பெற்று அவர்களால் கண்ணுக்குள் கண்ணாக அன்புடன் போற்றி வளர்க்கப்படுவீர்கள். அவர்கள் உங்களை நன்கு பேணிவளர்ப்பதற்குத் தக்கபடி உங்களுக்கு வரும் நோய்கள் அவற்றுக்கான சிகித்சைகள் வளர்ப்பு முறைகள் இவைபற்றி விரிவாக ஒரு நூல் தொகுத்துக் கொடுப்பேன். நீங்கள் கவலையற்று வாழலாம் — என்று அருளினார். அதன்படி 16500 சுலோகங்கள் கொண்ட "சாலிஹோத்திரீயம்"—என்ற பெயர்பெற்ற நூல் எழுதினார்.

## உடலமைப்பு

(குதிரையின் அங்கங்களின் பெயரும் இடமும்—ஸம்ஸ்கிருத மூலத்தின் அடியிலேயே தமிழிலும் ஆங்கிலத்திலும் கொடுக்கப்பட்டிருக்கிறது.)

## அங்கங்களின் இலக்கணம்

குற்றமுள்ள குதிரைகள் வாகனத்திற்கு தக்கவை யல்ல. உதடுகள், கடைவாய், நாக்கு, பற்கள், முகம் தாடை, மூக்கு, கன்னம், கண்கள், நெற்றி, தலை கொண்டை, காதுகள், கழுத்து, பிடரிமயிர், தோள் மார்பு, முன்கால் துடைகள், கணுக்கால், முழங்கால் புருவமத்தி, பாதங்கள், பக்கங்கள், பிருஷ்டம், வயிறு இடுப்பு, வால், ஆண்குறி, அண்டகோசம், பின் துடைகள், குளம்புகள், ஆவர்த்தம், நடை, நிறம், குரல், சாயை, மணம், ஸத்துவம் இவற்றில் குற்ற முள்ள குதிரைகளை முற்றிலும் நீக்கிவிடவேண்டும்

நன்கு நீண்டு உயர்ந்து முன்புறம் சிறுத்து சதைப் பற்றில்லாமல் அழுத்தமாய் பக்கங்கள் வழிந்து செறிந்து, பெரிய நெற்றிக்கண்களுடன் மத்தியில் மணமுள்ள **முகம்.**

திரண்டு பருத்து மெல்லிய கோடுகளுடன் சிவந்து அழகிய **கன்னம்.**

தாமரையிதழ்போல் சிவந்து மெதுவாய், நீண்டு மெல்லியதான அழகிய **நாக்கு.**

ஏற்றத் தாழ்வில்லாமல், இடுக்கில்லாமல் நெருக்க மாயும் கனமாயும் உறுதியாயும் நடுவில் ஒளியுள்ள தாயும் நன்கு பொருந்தியமைந்த **பற்கள்.** அவை களில் ஆறு பற்களில் மட்டும் வட்டமாயமைந்த சிறு புள்ளிகள். கனமாயும் அழுத்தமாயும் உறுதியுள்ள **தித்திப்பற்கள்.**

மிருதுவாய் மெல்லியதான **கடைவாய், மேலுதடு, கீழுதடு, அண்ணம், மூக்கின் கீழ்பாகங்கள்.**

சிறிது சிவந்து மயிரில்லாத **கீழுதடு,** மயிரில்லாத **மேலுதடு,** சிவந்த **தாடை,** சிமிழ்போல் வட்டமான **மூக்கோட்டை.**

காயம், நோய்களில்லாமல் அகண்டு, கம்பீரமான தோற்றமுடையதாய் ஒன்றுக்கொன்று ஸமமான தேன், தங்கம் இவைகளின் நிறமுள்ளதான **கண்கள்.**

காயம் நோயில்லாது மேகநிறமான **கருவிழிகள்.**

குழிவிழாமல் சதைப்பற்றில்லாமல் சுழியுள்ள அகண்ட **நெற்றி.**

குட்டையாய், மெல்லியதாய், நேராய், கூர்மையான நுனிகளையுடையதாய், நீண்ட மயிரில்லாத, அல்லது பொன்னிற மயிர்களுள்ள **காதுகள்.**

உருண்டு திரண்டு சிறிது வளைந்து நிமிர்ந்து அழுத்தமான **கழுத்து.**

சடையில்லாமல் மிருதுவான **பிடரிமயிர்.** மிருதுவான **மயிர்கள்.**

அகண்டு உருண்டு திரண்டு நரம்பு தெரியாத **மார்பு.**

மார்புக்கு நேராக, பருத்து நீண்டு, ஒன்றுக்கொன்று இணையுள்ளதாய் நெளிவில்லாது நேரான **முன்கால்கள்,**

உருண்டு திரண்டு, ஏற்றத்தாழ்வின்றி, சதைப் பற்றின்றி மறைந்த **முழங்கால்கள்.**

உருண்டு திரண்டு சதைப்பற்றில்லாமல், நரம்புகள் சிறிதும் தெரியாமல் நெளிவில்லாத **கணைக்கால்.**

காயம் நடுக்கமில்லாமல், உருண்டு திரண்டு மேடு பள்ளமுள்ளதாய்(?) ஒன்றுசேர்ந்து பொருந்தி அழகாயமைந்த, **கணுக்கால்கள்.**

உருண்டு திரண்டு மெல்லியதாய் இசைகள் நன்கு பொருந்தி குட்டையாய், உறுதியான **குளம்புத் தண்டுகள்.**

குட்டையாய், சிமிழ்போல் வட்டமாய், ஒன்றுக்கொன்று ஸமமாய், ஒரேவிதமான நிறமுள்ளதாய், மிக அழுத்தமுள்ளதான, **குளம்புகள்.**

குளம்புடன் ஒன்றிச் சேர்ந்து அழுத்தமான குளம்பின் மேலேயுள்ள மாம்ஸ பாகமான **மண்டூகங்கள்.** (பள்ளமான குளம்புகளின் கீழ்பாகங்கள்.)

மேல்பாகத்தில் சதைப்பற்றுள்ளதாய், கரவு சரிவாய், குட்டையாய், வட்டவடிவமாய், ஏற்றத்தாழ்வில்லாத **விலாப்புறங்கள்.**

சரியாது வட்டமான **வயிறு.**

எலும்புகள் நன்கு மூடி மறைந்து குட்டையாய், அகன்று கொஞ்சம் நீண்டு ஸமதளமாய் சிறிது வளைந்த **முதுகு.**

பருத்து குட்டையாய் நுனி பருத்து, கருப்புநிறமாயில்லாத **மாணி.**

சிறிதாயும் உருண்டையாயும், ஒரே அளவா யும், சதைப்பற்றில்லாமலும் மயிரில்லாததுமான **விதைகள்.**

பருத்து **வட்டவடிவமான இடுப்பு.**

பருத்த முதுகெலும்பின் பின்பாகத்தையுடைய தாய், வட்டமாய்ப் பருத்துச் சதுரமான **பிருஷ்ட பாகங்கள்.**

மிருதுவாய் ஒளியுடன் கூடிய மயிர்களுள்ளதாய், வட்ட வடிவமான பிருஷ்டத்தில் அமுங்கிய **வால்.**

முன்கால்களின் துடை, முழங்கால், கணுக்கால், கணைக்கால், குளம்புத்தண்டு, குளம்பு இவைகளுக்கு ஒற்றுமையான பின்கால்களின் துடை, முழங்கால், கணுக்கால், கணைக்கால், குளம்புத்தண்டு, குளம்பு.

இவை குதிரைகளின் அங்க அமைப்பில் சிறந்தவை.

## அசுவ இலக்கண வகுப்பு

முன் அத்தியாயத்தில் பொதுவாக மேம்பார்வை யாக குதிரைகளின் இலக்கணம் கூறப்பட்டது. இனி குதிரைகளில் கவனிக்கவேண்டிய இலக்கணங் கள் வகுத்துக் கூறப்படுகின்றன. அவை எட்டு வகைப்படும். 1. சரீர இலக்கணம், 2. ஸத்துவ (தன்மை) இலக்கணம், 3. நிற இலக்கணம், 4. நடை இலக்கணம், 5. குரல் இலக்கணம், 6. மண இலக் கணம், 7. நிழல் இலக்கணம், 8. ஆவர்த்தங்களின் (சுழிகளின்) இலக்கணம்.

## வயதுமுறையும் அங்கவகுப்பும்

---

குதிரையின் வயதறிய அதன் ஆயுளை பத்து பாகமாகப் பிரிக்கிறது இந்த நூல். குதிரைக்குச் சராசரி வயது முப்பத்திரண்டு. அதைப் பத்தாகப் பிரிக்க ஒவ்வொரு பாகமும் மூன்று வருஷம் இரண்டு மாதம் பனிரெண்டு நாட்களாகும். (அந்தந்த நிலையின் இலக்கணம் பின்னுல் கூறப்படுகிறது.)

அதுபோலவே உடலமைப்பும் பத்துப்பகுதிகளாக வகுக்கப்படுகிறது. (இந்த வகுப்பு நிற இலக்கண விஷயத்தில் பயன்படுகிறது.)

1. வாயிலிருந்து நெற்றி வரை.
2. தலைமட்டமிருந்து கழுத்து வரை.
3. கழுத்து பிடரி தோள்பட்டைகள்.
4. திமிலும் அதன் பக்கங்களும்.
5. முதுகின் முன்பாகம்.
6. இருதயம் மார்பு அக்குள்.
7. வயிறு முதுகின் பின்பாகம் தொப்புள்வரை.
8. வயிற்றின் அடிப்பாகம்.
9. இடுப்பு, துடை.
   துடைக்குக் கீழ் கணுக்கால் வரை.
   (நான்கு கால்களிலும்.)
10. அதன்கீழ் குளம்பு வரை.
   (நான்கு கால்களிலும்)

# ஆவர்த்தங்கள்

மயிர்கள் சுழிபோல் சுழிந்திருப்பதற்கு "ஆவர்த்தம்" என்று பெயர். முத்துச்சிப்பி வடிவமாயிருப்பதற்கு, "சுக்தி" என்றும், பல சிப்பிகள் கூடியது போன்ற வடிவத்திற்கு "ஸங்காதம்" என்றும், ஜாதிப்பூவைப் போலிருந்தால் "முகுளம்" என்றும், நாக்கைப்போன்ற வடிவத்திற்கு "*அவலீடம்" என்றும்,(?) "மரவட்டை" போன்ற வடிவத்திற்கு "சதபாதீ" என்றும், மிதியடியின் அரைவடிவத்திற்கு "பாதுகார்தம்" என்றும், முழுமிதியடிவடிவமாயிருப்பதற்கு "பாதுகை" என்றும், பெயர். இப்படி எட்டு வடிவங்களாக மயிர்கள் சுழிந்திருப்பதால் இவைகளுக்கு பொதுவாக, ஆவர்த்தம்—சுழி, என்றும் ரோமஜம் (மயிர்களாலுண்டானது) என்றும் பெயர்.

இந்த எட்டு சுழிகளில், சதபாதீ, பாதுகை இரண்டும் ஆறு அங்குல நீளமும், அர்தபாதுகை, முகுளம் இரண்டும் இரண்டங்குலநீளமும், ஆவர்த்தம் ஒரு அங்குல அளவும் உள்ளது.

மாளிகை, தாமரைமலர், சக்கிரம், தோரணம், வில், கத்தி, சங்கு, திட்டாணி, ஸ்வஸ்திகம், மீன், பூர்ணகலசம், ஸ்ரீவிருக்ஷம், மாலே, சூரியன், அஷ்டாபதம், வஜ்ராயுதம், கலப்பை, கதை, சந்திரபிம்பம்,

---

* சுக்தியும் முகுளமும் தலைகீழாக இருந்தால் அவலீடம் என்று சொல்லலாம்—என மற்றொரு இலக்கணம் கூறுகிறது.

யூபஸ்தம்பம், இவைகளைப்போன்ற சுழிகளையுடைய குதிரைகள் தனது யஜமானனின் உயிரைக் காப்பாற்றக்கூடியவைகளாம். ஆகவே இத்தகைய சுழியுள்ள குதிரைகள் சண்டைக்கு சிலாக்கியமானவைகள்.

இவைகள் 1. துருவாவர்த்தம், 2. சுபாவர்த்தம், 3. அசுபாவர்த்தம், 4. ஆகந்துகாவர்த்தம் என நான்கு வகைப்படும்.

இவைகளில் துருவாவர்த்தங்கள் பத்து (10), சுபாவர்த்தங்கள் முப்பத்தேழு (37), அசுபாவர்த்தங்கள் எழுபத்தாறு (76), ஆகந்துகாவர்த்தங்கள் (13), ஆக சுழிகள் நூற்றுமுப்பத்து ஆறு (136).

எந்தக் குதிரையிலும் அவச்யம் இருக்கவேண்டிய ஆவர்த்தங்களுக்கு துருவாவர்த்தங்கள் எனப்பெயர் அவை பத்து. மார்பிலிரண்டும், தலையிலிரண்டும், மூக்குத் துவாரங்களிலிரண்டும், ஆண்குறியிலிரண்டும், நடுநெற்றியிலொன்றும், மேலுதட்டிலொன்றும் இருக்கும்.

இந்த பத்துச் சுழிகளில் சில சுழிகளில்லாவிட்டாலும், அரைகுறையாயிருந்தாலும் உரிய இடங்களில் இல்லாமல் நகர்ந்திருந்தாலும், குற்றம்தான்.

பொதுவாகச் சுழிகள் யாவுமே வலதுபுறமாய்ச் சுழிந்திருந்தால் சுபபலனையும் இடதுபுறமாய்ச் சுழிந்திருந்தால் அசுபபலனையும் கொடுக்கும்.

மற்ற நூற்றுஇருபத்தாறு சுழிகளில் முப்பத்தேழு சுழிகள் சுபமானவை. அவை இருபது இடங்களிலிருக்கும்.

